ततो भुक्तवतां तेषां विप्राणामिल्वलोऽब्रवीत् ।
वातापे निष्क्रमस्वेति स्वरेण महता वदन् ॥ ५९ ॥

ततो भ्रातुर्वचः श्रुत्वा वातापिर्मेषवन्नदन् ।
भित्त्वा भित्त्वा शरीराणि ब्राह्मणानां विनिष्पतत् ॥ ६० ॥

ब्राह्मणानां सहस्राणि तैरेवं कामरूपिभिः ।
विनाशितानि संहत्य नित्यशः पिशिताशनैः ॥ ६१ ॥

अगस्त्येन तदा देवैः प्रार्थितेन महर्षिणा ।
अनुकूलः किल श्राद्धे भक्षितः स निशाचरः ॥ ६२ ॥

ततः सम्पन्नमित्युक्त्वा दत्त्वा हस्तावसेचनम् ।
भ्रातरं निष्क्रमस्वेति चेल्वलः सोऽभ्यभाषत ॥ ६३ ॥

तं तथा भाषमाणं तु भ्रातरं विप्रघातिनम् ।
अब्रवीत् प्रहसन् धीमानगस्त्यो मुनिसत्तमः ॥ ६४ ॥

कुतो निष्क्रमितुं शक्तिर्मया जीर्णस्य रक्षसः ।
भ्रातुस्ते मेषरूपस्य गतस्य यमसादनम् ॥ ६५ ॥

अथ तस्य वचः श्रुत्वा भ्रातुर्निधनसंश्रितम् ।
प्रधर्षयितुमारेभे मुनिं क्रोधान्निशाचरः ॥ ६६ ॥

सोऽभिद्रवन्मुनिश्रेष्ठं मुनिना दीप्ततेजसा ।
चक्षुषाऽनलकल्पेन निर्दग्धो निधनं गतः ॥ ६७ ॥

तस्यायमाश्रमो भ्रातुस्तटाकवनशोभितः ।
विप्रानुकम्पया येन कर्मैतद्दुष्करं कृतम् ॥ ६८ ॥

एवं कथयमानस्य तस्य सौमित्रिणा सह ।
रामस्यास्तंगतः सूर्यः सन्ध्याकालोऽभ्यवर्तत ॥ ६९ ॥

उपास्य पश्चिमां सन्ध्यां सह भ्राता यथाविधि ।
प्रविवेशाश्रमपदं तमृषिं सोऽभ्यवादयत् ॥ ७० ॥

सम्यक् प्रतिगृहीतश्च मुनिना तेन राघवः ।
न्यवसत्तां निशामेकां प्राश्य मूलफलानि च ॥ ७१ ॥

तस्यां रात्र्यां व्यतीतायां विमले सूर्यमण्डले ।
भ्रातरं तमगस्त्यस्य आमन्त्रयत राघवः ॥ ७२ ॥

अभिवादये त्वां भगवन् सुखमध्युषितो निशाम् ।
आमन्त्रये त्वां गच्छामि गुरुं ते द्रष्टुमग्रजम् ॥ ७३ ॥

गम्यतामिति तेनोक्तो जगाम रघुनन्दनः ।
यथोद्दिष्टेन मार्गेण वनं तच्चावलोकयन् ॥ ७४ ॥

निवारान् पनसांस्तालान्
तिमिशान् वञ्जुलान्धवान् ।
चिरिबिल्वान् मधूकांश्च
बिल्वानपि च तिन्दुकान् ॥ ७५ ॥

पुष्पितान् पुष्पिताग्राभिर्लताभिरनुवेष्टितान् ।
ददर्श रामः शतशस्तत्र कान्तारपादपान् ॥ ७६ ॥

हस्तिहस्तैर्विमृदितान् वानरैरुपशोभितान् ।
मत्तैः शकुनिसङ्घैश्च शतशश्च प्रणादितान् ॥ ७७ ॥

ततोऽब्रवीत् समीपस्थं रामो राजीवलोचनः ।
पृष्ठतोऽनुगतं वीरं लक्ष्मणं लक्ष्मिवर्धनम् ॥ ७८ ॥

स्निग्धपत्रा यथा वृक्षा यथा क्षान्ता मृगद्विजाः ।
आश्रमो नातिदूरस्थो महर्षेर्भावितात्मनः ॥ ७९ ॥

अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा ।
आश्रमो दृश्यते तस्य परिश्रान्तश्रमापहः ॥ ८० ॥

आज्यधूमाकुलवनश्चीरमालापरिष्कृतः ।
प्रशान्तमृगयूथश्च नानाशकुनिनादितः ॥ ८१ ॥

निगृह्य तरसा मृत्युं लोकानां हितकाम्यया ।
दक्षिणा दिक्कृता येन शरण्या पुण्यकर्मणा ॥ ८२ ॥

तस्येदमाश्रमपदं प्रभावाद्यस्य राक्षसैः ।
दिगियं दक्षिणा त्रासाद्दृश्यते नोपभुज्यते ॥ ८३ ॥

यदा प्रभृति चाक्रान्ता दिगियं पुण्यकर्मणा ।
तदा प्रभृति निर्वैराः प्रशान्ता रजनीचराः ॥ ८४ ॥

नाम्ना चेयं भगवतो दक्षिणा दिक्प्रदक्षिणा ।
प्रथिता त्रिषु लोकेषु दुर्धर्षा क्रूरकर्मभिः ॥ ८५ ॥

मार्गं निरोद्धुं निरतो भास्करस्याचलोत्तमः ।
निदेशं पालयन् यस्य विन्ध्यः शैलो न वर्धते ॥ ८६ ॥

अयं दीर्घायुषस्तस्य लोके विश्रुतकर्मणः ।
अगस्त्यस्याश्रमः श्रीमान् विनीतजनसेवितः ॥ ८७ ॥

एष लोकार्चितः साधुर्हिते नित्यरतः सताम् ।
अस्मानभिगतानेष श्रेयसा योजयिष्यति ॥ ८८ ॥

आराधयिष्याम्यत्राहमगस्त्यं तं महामुनिम् ।
शेषं च वनवासस्य सौम्य वत्स्याम्यहं सुखम् ॥ ८९ ॥

अत्र देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अगस्त्यं नियताहारं सततं पर्युपासते ॥ ९० ॥

नात्र जीवेन्मृषावादी क्रूरो वा यदि वा शठः ।
नृशंसः कामवृत्तो वा मुनिरेष तथाविधः ॥ ९१ ॥

अत्र देवाश्च यक्षाश्च नागाश्च पतगैः सह ।
वसन्ति नियताहारा धर्ममाराधयिष्णवः ॥ ९२ ॥

अत्र सिद्धा महात्मानो विमानैः सूर्यसन्निभः ।
त्यक्तदेहा नवैर्देहैः स्वर्याताः परमर्षयः ॥ ९३ ॥

यक्षत्वममरत्वं च राज्यानि विविधानि च ।
अत्र देवाः प्रयच्छन्ति भूतैराराधिताः शुभैः ॥ ९४ ॥

आगताः स्माश्रमपदं सौमित्रे प्रविशाग्रतः ।
निवेदयस्व मां प्राप्तमृषये सीतया सह ॥ ९५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे एकादशः सर्गः ॥

आदितः श्लोकाः ७०८० आरण्यकाण्डे आदितः श्लोकाः ३६८

## द्वादशः सर्गः

### अगस्त्यदर्शनम् ॥

स प्रविश्याश्रमपदं लक्ष्मणो राघवानुजः ।
अगस्त्यशिष्यमासाद्य वाक्यमेतदुवाच ह ॥ १ ॥

राजा दशरथो नाम ज्येष्ठस्तस्य सुतो बली ।
रामः प्राप्तो मुनिं द्रष्टुं भार्यया सह सीतया ॥ २ ॥

लक्ष्मणो नाम तस्याऽहं भ्राता त्ववरजो हितः ।
अनुकूलश्च भक्तश्च यदि ते श्रोत्रमागतः ॥ ३ ॥

ते वयं वनमत्युग्रं प्रविष्टाः पितृशासनात् ।
द्रष्टुमिच्छामहे सर्वे भगवन्तं निवेद्यताम् ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य तपोधनः ।
तथेत्युक्त्वाऽग्निशरणं प्रविवेश निवेदितुम् ॥ ५ ॥

स प्रविश्य मुनिश्रेष्ठं तपसा दुष्प्रधर्षणम् ।
कृताञ्जलिरुवाचेदं रामागमनमञ्जसा ॥
यथोक्तं लक्ष्मणेनैव शिष्योऽगस्त्यस्य संमतः ॥ ६ ॥

पुत्रौ दशरथस्येमौ रामो लक्ष्मण एव च ।
प्रविष्टावाश्रमपदं सीतया सह भार्यया ॥ ७ ॥

द्रष्टुं भवन्तमायातौ शुश्रूषार्थमरिन्दमौ ।
यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि ॥ ८ ॥

ततः शिष्यादुपश्रुत्य प्राप्तं रामं सलक्ष्मणम् ।
वैदेहीं च महाभागामिदं वचनमब्रवीत् ॥ ९ ॥

दिष्ट्या रामश्चिरस्याद्य द्रष्टुं मां समुपस्थितः ।
मनसा कांक्षितं ह्यस्य मयाऽप्यागमनं प्रति ॥ १० ॥

गम्यतां सत्कृतो रामस्सभार्यस्सहलक्ष्मणः ।
प्रवेश्यतां समीपं मे किञ्चासौ न प्रवेशितः ॥ ११ ॥

एवमुक्तस्तु मुनिना धर्मज्ञेन महात्मना ।
अभिवाद्याब्रवीच्छिष्यस्तथेति नियताञ्जलिः ॥ १२ ॥

ततो निष्क्रम्य सम्भ्रान्तश्शिष्यो लक्ष्मणमब्रवीत् ।
क्वासौ रामो मुनिं द्रष्टुमेतु प्रविशतु स्वयम् ॥ १३ ॥

ततो गत्वाऽऽश्रमद्वारं शिष्येण सह लक्ष्मणः ।
दर्शयामास काकुत्स्थं सीतां च जनकात्मजाम् ॥ १४ ॥

तं शिष्यः प्रश्रितं वाक्यमगस्त्यवचनं ब्रुवन् ।
प्रावेशयद्यथान्यायं सत्कारार्हं सुसत्कृतम् ॥ १५ ॥

प्रविवेश ततो रामस्सीतया सहलक्ष्मणः ।
प्रशान्तहरिणाकीर्णमाश्रमं ह्यवलोकयन् ॥ १६ ॥

स तत्र ब्रह्मणः स्थानमग्नेः स्थानं तथैव च ।
विष्णोः स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः ॥ १७ ॥

सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ।
धातुर्विधातुः स्थाने च वायोः स्थानं तथैव च ॥ १८ ॥

स्थानं च पाशहस्तस्य वरुणस्य महात्मनः ।
स्थानं तथैव गायत्र्या वसूनां स्थानमेव च ॥ १९ ॥

नागराजस्य च स्थानमनन्तस्य महात्मनः ।
कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति ॥ २० ॥

ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ।
तं ददर्शाग्रतो रामो मुनीनां दीप्ततेजसाम् ॥ २१ ॥

अब्रवीद्वचनं रामो लक्ष्मणं लक्ष्मिवर्धनम् ॥ २२ ॥

एष लक्ष्मण निष्क्रामत्यगस्त्यो भगवानृषिः ॥ २३ ॥

औदार्येणावगच्छामि निधानं तपसामिदम् ॥ २४ ॥

एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम् ।
जग्राह परमप्रीतस्तस्य पादौ परन्तपः ॥ २५ ॥

अभिवाद्य तु धर्मात्मा तस्थौ रामः कृताञ्जलिः ।
सीतया सह वैदेह्या तदा रामस्सलक्ष्मणः ॥ २६ ॥

प्रतिगृह्य च काकुत्स्थमर्चयित्वाऽऽसनोदकैः ।
कुशलप्रश्नमुक्त्वा च आस्यतामिति चाब्रवीत् ॥ २७ ॥

अग्निं हुत्वा प्रदायार्घ्यमतिथीन् प्रतिपूज्य च ।
वानप्रस्थेन धर्मेण स तेषां भोजनं ददौ ॥ २८ ॥

प्रथमं चोपविश्याथ धर्मज्ञो मुनिपुङ्गवः ।
उवाच राममासीनं प्राञ्जलिं धर्मकोविदम् ॥ २९ ॥

अन्यथा खलु काकुत्स्थ
तपस्वी समुदाचरन् ।
दुःसाक्षीव परे लोके
स्वानि मांसानि भक्षयेत् ॥ ३० ॥

राजा सर्वस्य लोकस्य धर्मचारी महारथः ।
पूजनीयश्च मान्यश्च भवान् प्राप्तः प्रियातिथिः ॥ ३१ ॥

एवमुक्त्वा फलैर्मूलैः पुष्पैरन्यैश्च राघवम् ।
पूजयित्वा यथाकामं पुनरेवाब्रवीद्वचः ॥ ३२ ॥

इदं दिव्यं महच्चापं हेमवज्रविभूषितम् ।
वैष्णवं पुरुषव्याघ्र निर्मितं विश्वकर्मणा ।
अमोघस्सूर्यसङ्काशो ब्रह्मदत्तश्शरोत्तमः ॥ ३३ ॥

दत्तौ मम महेन्द्रेण तूणी चाक्षयसायकौ
सम्पूर्णौ निशितैर्बाणैर्ज्वलद्भिरिव पावकैः ॥ ३४ ॥

महारजतकोशोऽयमसिर्हेमविभूषितः ॥ ३५ ॥

अनेन धनुषा राम हत्वा सङ्ख्ये महासुरान्
आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम् ॥ ३६ ॥

तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद
जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ॥ ३७ ॥

इदं च ते तनुत्राणमभेद्यं मघवान्ददौ
स्पर्शयानुपमं वीर प्रतिगृह्णीष्व मानद ॥ ३८ ॥

जये च संशयं प्राप्य चिन्तयिष्यसि विह्वलन्
हरियुग्यं रथं दिव्यमुपनेष्यति मातलिः ॥ ३९ ॥

एवमुक्त्वा महातेजास्समस्तं तद्वरायुधम्
दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे द्वादशः सर्गः ॥

आदितः श्लोकाः ७१२० आरण्यकाण्डे आदितः श्लोकाः ४०८

## त्रयोदशः सर्गः

### पञ्चवटिंप्रति प्रस्थानम् ॥

सुखं स्वप महाबाहो ससीतस्सहलक्ष्मणः ।
रविरस्तं गतस्सौम्य सन्ध्याकालोऽप्युपागमत् ॥ १ ॥

एते निशाचरा राम निलीना मृगपक्षिणः ।
नगाग्रेषु भृशं लीना दृश्यन्ते सुसमाहिताः ॥
नैशेन तमसा व्याप्तमप्रकाशं नभःस्थलम् ॥ २ ॥

एवमुक्तो महाबाहुरगस्त्येन महात्मना ।
उपास्य पश्चिमां सन्ध्यां रामस्सौमित्रिणा सह ॥ ३ ॥

अभिवाद्य महात्मानमगस्त्यमृषिसत्तमम् ।
सुष्वाप रजनीमेकां पूजितः परमर्षिणा ॥ ४ ॥

सुखोषितस्तदा रामस्सन्ध्यामन्वास्य सानुजः ।
कृतपूर्वाह्णिकस्तस्थौ स्नात्वा हुतहुताशनः ॥ ५ ॥

लक्ष्मणेन सह भ्रात्रा सीतया च परन्तपः ।
उपागच्छद्महात्मा अगस्त्यं सूर्यवर्चसम् ॥ ६ ॥

स दृष्ट्वा राघवं श्रीमानगस्त्यस्संयताञ्जलिम् ।
प्रतिपूज्य यथान्यायमिदं वचनमब्रवीत् ॥ ७ ॥

कच्चित्सुखा निशा राम व्यतीता रघुनन्दन ।
तव सभ्रातृभार्यस्य ममाश्रमपदे शुभे ॥ ८ ॥

अगस्त्येनैवमुक्तस्तु काकुत्स्थो वाक्यमब्रवीत् ।
मानिताः स्म यथान्यायं त्वया पूज्येन पूजिताः ॥ ९ ॥

शयनासनदानेन भोजनाच्छादनैश्शुभैः ।
राज्ञो दशरथस्यैव पुरस्यान्तःपुरे यथा ।
सुखोषिताः स्म भगवन् सर्वकामैरुपस्थिताः ॥ १० ॥

सुखोपविष्टे रामे तु सहसीते सलक्ष्मणे ।
स तेन ऋषिसङ्घेन अगस्त्यो वाक्यमब्रवीत् ॥ ११ ॥

कालोऽयं गतभूयिष्ठो यः कालस्तव राघव ।
समयो यो नरेन्द्रेण कृतो दशरथेन ते ।
तीर्णप्रतिज्ञः काकुत्स्थ सुखं राम निवत्स्यसि ॥ १२ ॥

धन्यस्ते जनको राम स राजा रघुनन्दन ।
यस्त्वया ज्येष्ठपुत्रेण ययातिरिव तारितः ॥ १३ ॥

एवमुक्तस्ततो रामः प्रत्युवाच कृताञ्जलिः ।
प्रीतः प्रीततरं वाक्यं प्रत्युवाच महायशाः ॥ १४ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव ।
प्रीयमाणस्तु सुप्रीतो नास्ति धन्यतरो मम ॥ १५ ॥

मया न तारितो राजा स्वगुणैरेव तारितः ।
स्वर्गं दशरथः प्राप्तः स्वकृतैः पुण्यकर्मभिः ॥ १६ ॥

अयं तु देशो निखिलस्सर्व एव महातपः ।
अशरण्यश्शरण्योऽभूद्यथैव विनिवेशितः ।
तथाऽऽख्याह्यर्थतत्त्वेन परं कौतूहलं मम ॥ १७ ॥

श्रुत्वा तु वचनं तस्य रामस्य मधुराक्षरम् ।
प्रत्युवाच ततो राममगस्त्यो भगवानृषिः ॥ १८ ॥

शृणु राघव तत्त्वेन देशस्याऽस्य यथातथम् ॥ १९ ॥

दण्डकेन परित्यक्तो ह्ययं देशो महात्मना ।
भार्गवस्य च शापेन निर्मनुष्यमृगोऽभवत् ॥ २० ॥

वृक्षगुल्मलताहीनं तापसैरभिवर्जितम् ।
कान्तारमभवत्तात घोरं परमदारुणम् ॥
योजनार्धसहस्रन्तु विन्ध्यपादस्तु दक्षिणः ॥ २१ ॥

नानुवर्षति पर्जन्यो नानुवाति सुखोऽनिलः ।
रक्षःप्रतिभयं घोरमासीत्परमदारुणम् ॥ २२ ॥

बहून्यब्दसहस्राणि ह्येतदासीदमानुषम् ।
गन्धर्वैर्ऋषिसङ्घैश्च देवैश्च परिवर्जितम् ॥ २३ ॥

कस्य चित्त्वथ कालस्य दैवयोगादहं नृप ।
हिमवच्छिखरादेशादिह प्राप्तोऽस्मि मानद ॥ २४ ॥

ततो मया समाहूतः पर्जन्यो जलदैस्सह ।
स्वच्छन्द र्षश्च कृतः कञ्चित्कालमरिन्दम ॥ २५ ॥

यमस्य चैव चारास्तु बहून्यब्दशतानि वै ।
तेजसा मृत्युभूताश्च व्याधयश्च तिरस्कृताः ॥ २६ ॥

हिमवत्पादजा वृक्षाश्चिन्तिता मनसाऽऽगताः ।
प्रवृत्ताश्चपुनर्नद्यः फुल्लपङ्कजमण्डिताः ॥ २७ ॥

तटाकानि च रम्याणि सरितश्च सरांसि च ॥ २८ ॥

प्रवृद्धवनषण्डन्तु स्फीतसस्यवनाकुलम् ।
अचिरेणाऽभवद्रम्यं सर्षिसङ्घानुसेवितम् ॥ २९ ॥

केवलं त्वभिशापेन तस्यैव रघुनन्दन ।
सोपद्रुतमिवाप्येतद्राक्षसैरुग्रकर्मभिः ॥ ३० ॥

यदाप्रभृति चापि त्वं चित्रकूटमुपागतः ।
तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ ३१ ॥

ऋषीणामभयं वीर दातुमर्हसि मानद ॥ ३२ ॥

अस्माद्धि कारणाद्राम दण्डकारण्यवासिनाम् ।
त्राणार्थमिह संप्राप्तस्त्रातुमर्हति नो भवान् ॥ ३३ ॥

समर्थोऽह्यसि काकुत्स्थ त्रैलोक्य स्यापि रक्षणे ।
किं पुनर्वीर रक्षांसि द्विजमन्युहतानि वै ॥ ३४ ॥

अयमिक्ष्वाकुपुत्रेण दण्डकेन महाबल ।
देशो निराकृतो राजञ्छापदोषेण राघव ॥ ३५ ॥

दण्डकारण्यमखिलं दर्शनादेव राघव ।
शापस्यान्ताय काकुत्स्थ प्राप्तस्त्वमरिमर्दन ॥ ३६ ॥

सर्वं मन्युपरावृत्तैः पितृभिस्सं निराकृतम् ।
तारय त्वं महाबाहो दण्डकारण्यमद्य वै ॥ ३७ ॥

एवमुक्तस्तदा रामः प्रत्युवाच महामुनिम् ।
आश्चर्यमिदमाख्यातं देशस्याऽस्य यथा तथम् ॥ ३८ ॥

एवमुक्तस्तु रामेण महर्षिस्त्विदमब्रवीत् ॥ ३९ ॥

राम प्रीतोऽस्मि भद्रं ते परितुष्टोऽस्मि लक्ष्मण ।
अभिवादयितुं यन्मां प्राप्तौ स्थः सह सीतया ॥ ४० ॥

अध्वश्रमेण वां खेदो बाधते प्रचुरश्रमः ।
व्यक्तमुत्कण्ठते चापि मैथिली जनकात्मजा ॥ ४१ ॥

एषा हि सुकुमारी च दुःखैश्च न विमानिता ।
प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ ४२ ॥

यथैषा रमते राम इह सीता तथा कुरु ।
दुष्करं कृतवत्येषा वने त्वामनुगच्छति ॥ ४३ ॥

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन ।
समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च ॥ ४४ ॥

शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ४५ ॥

इयं तु भवतो भार्या दोषैरेतैर्विवर्जित ।
श्लाघ्या च व्यपदेश्या च यथा देवेष्वरुन्धती ॥ ४६ ॥

अलङ्कृतोऽयं देशश्च यत्र सौमित्रिणा सह ।
वैदेह्या चानया राम वत्स्यसि त्वमरिन्दम ॥ ४७ ॥

एवमुक्तस्तु मुनिना राघवस्संयताञ्जलिः ।
उवाच प्रश्रितं वाक्यमृषिं दीप्तमिवानलम् ॥ ४८ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गवः ।
गुणैस्सभ्रातृभार्यस्य वरदः परितुष्यति ॥ ४९ ॥

किन्तु व्यादिश मे देशं सोदकं बहुकाननम् ।
यत्राश्रमपदं कृत्वा वसेयं निरतस्सुखम् ॥ ५० ॥

ततोऽब्रवीन्मुनिश्रेष्ठः श्रुत्वा रामस्य भाषितम् ।
ध्यात्वा मुहूर्तं धर्मात्मा धीरो धीरतरं वचः ॥ ५१ ॥

इतो द्वियोजने तात बहुमूलफलोदकः ।
देशो बहुमृगः श्रीमान् पञ्चवट्यभिविश्रुतः ॥ ५२ ॥

तत्र गत्वाऽऽश्रमपदं कृत्वा सौमित्रिणा सह ।
रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन् ॥ ५३ ॥

विदितो ह्येष वृत्तान्तो मम सर्वस्तवानघ ।
तपसश्च प्रभावेन स्नेहाद्दशरथस्य च ॥ ५४ ॥

हृदयस्थश्च ते छन्दो विज्ञातस्तपसा मया ।
इह वासं प्रतिज्ञाय मया सह तपोवने ॥ ५५ ॥

अतश्च त्वामहं ब्रूमि गच्छ पञ्चवटीमितः ॥ ५६ ॥

स हि रम्यो वनोद्देशो मैथिली तत्र रंस्यते ।
स देशः श्लाघनीयश्च नातिदूरे च राघव ॥ ५७ ॥

गोदावर्यास्समीपे च मैथिली तत्र रंस्यते ।
प्राज्यमूलफलश्चैव नानाद्विजगणायुतः ॥ ५८ ॥

विविक्तश्च महाबाहो पुण्यो रम्यस्तथैव च ॥ ५९ ॥

भवानपि सदारश्च शक्तश्च परिरक्षणे ।
अपि चात्र वसन्राम तापसान् पालयिष्यसि ॥ ६० ॥

एतदालक्ष्यते वीर मधूकानां महद्वनम् ।
उत्तरेणास्य गन्तव्यं न्यग्रोधमभिगच्छता ॥ ६१ ॥

ततः स्थलमुपारुह्य पर्वतस्याविदूरतः ।
ख्यातः पञ्चवटीत्येव नित्यपुष्पितकाननः ॥ ६२ ॥

अगस्त्येनैवमुक्तस्तु रामस्सौमित्रिणा सह ।
सत्कृत्यामन्त्रयामास तमृषिं सत्यवादिनम् ॥ ६३ ॥

तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ।
तमाश्रमं पञ्चवटीं जग्मतुस्सह सीतया ॥ ६४ ॥

गृहीतचापौ तु नराधिपात्मजौ
विषक्ततूणौ समरेष्वकातरौ ।
यथोपदिष्टेन पथा महर्षिणा
प्रजग्मतुः पञ्चवटीं समाहितौ ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे त्रयोदशः सर्गः ॥

आदितः श्लोकाः ७१८५ आरण्यकाण्डे आदितः श्लोकाः ४७३

## चतुर्दशः सर्गः

### जटायुदर्शनम् ॥

अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः ।
आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १ ॥

तं दृष्ट्वा तौ महाभागौ वटस्थं रामलक्ष्मणौ ।
मेनाते राक्षसं पक्षिं ब्रुवाणो को भवानिति ॥ २ ॥

स तौ मधुरया वाचा सौम्यया प्रीणयन्निव ।
उवाच वत्स मां विद्धि वयस्यं पितुरात्मनः ॥ ३ ॥

स तं पितृसखं बुध्वा पूजयामास राघवः ।
स तस्य कुलमव्यग्रमथ पप्रच्छ नाम च ॥ ४ ॥

रामस्य वचनं श्रुत्वा कुलमात्मानमेव च ।
आचचक्षे द्विजस्तस्मै सर्वभूतसमुद्भवम् ॥ ५ ॥

पूर्वकाले महाबाहो ये प्रजापतयोऽभवन् ।
तान्मे निगदतस्सर्वानादितः शृणु राघव ॥ ६ ॥

कर्दमःप्रथमस्तेषां विश्रुतस्तदनन्तरः ।
शेषश्च संश्रयश्चैव बहुपुत्रश्च वीर्यवान् ॥ ७ ॥

स्थाणुर्मरीचिरत्रिश्च क्रतुश्चैव महाबलः ।
पुलस्त्यश्चाङ्गिराश्चैव प्रचेताः पुलहस्तथा ॥ ८ ॥

दक्षो विवस्वानपरोऽरिष्टनेमिश्च राघव ।
कश्यपश्च महातेजास्तेषामासीच्च पश्चिमः ॥ ९ ॥

प्रजापतेस्तु दक्षस्य बभूवुरिति नः श्रुतम् ।
षष्टिर्दुहितरो राम यशस्विन्यो महायशः ॥ १० ॥

कश्यपः प्रतिजग्राह तासामष्टौ सुमध्यमाः ।
अदितिं च दितिं चैव दनूमपि च कालिकाम्
ताम्रां क्रोधवशां चैव मनुं चाप्यनलामपि ॥ ११ ॥

तास्तु कन्यास्ततः प्रीतः कश्यपः पुनरब्रवीत् ।
पुत्रांस्त्रैलोक्यभर्तॄन्वै जनयिष्यथ मत्समान् ॥ १२ ॥

अदितिस्तन्मना राम दितिश्च दनुरेव च ।
कालिका च महाबाहो शेषास्त्वमनसोऽभवन् ॥ १३ ॥

अदित्यां जज्ञिरे देवास्त्रयस्त्रिंशदरिन्दम ।
आदित्या वसवो रुद्रा ह्यश्विनौ च परन्तप ॥ १४ ॥

दितिस्त्वजनयत्पुत्रान् दैत्यांस्तात यशस्विनः ।
तेषामियं वसुमती पुराऽऽसीत्सवनार्णवा ॥ १५ ॥

दनुस्त्वजनयत्पुत्रमश्वग्रीवमरिन्दम ।
नरकं कालिकं चैव कालिकाऽपि व्यजायत ॥ १६ ॥

क्रौञ्चीं भासीं तथा श्येनीं धृतराष्ट्रीं तथा शुकीम् ।
ताम्राऽपि सुषुवे कन्याः पञ्चैता लोकविश्रुताः ॥ १७ ॥

उलूकान् जनयत्क्रौञ्ची भासी भासान् व्यजायत ।
श्येनी श्येनांश्च गृध्रांश्च व्यजायत सुतेजसः ॥ १८ ॥

धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रं ते विजज्ञे साऽपि भामिनी ॥ १९ ॥

शुकी नतां विजज्ञे तु नताया विनता सुता ॥ २० ॥

दश क्रोधवशा राम विजज्ञे ह्यात्मसम्भवाः ।
मृगीं च मृगमन्दां च हरिं भद्रमदामपि ॥ २१ ॥

मातङ्गीमपि शार्दूलीं श्वेतां च सुरभिं तथा ।
सर्वलक्षणसम्पन्नां सुरसां कद्रुकामपि ॥ २२ ॥

अपत्यं तु मृगास्सर्वे मृग्या नरवरोत्तम ।
ऋक्षाश्च मृगमन्दायास्सृमराश्चमरास्तथा ॥ २३ ॥

हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ।
ततस्त्विरावतीं नाम जज्ञे भद्रमदा सुताम् ॥ २४ ॥

तस्यास्त्वैरावतः पुत्रो लोकनाथो महागजः ।
मातङ्गास्त्वथ मातङ्ग्या अपत्यं मनुजर्षभ ॥ २५ ॥

गोलांगूलांश्च शार्दूली व्याघ्रांश्चाजनयत्सुतान् ।
दिशागजांश्च काकुत्स्थ श्वेताऽप्यजनयत्सुतान् ॥ २६ ॥

ततो दुहितरौ राम सुरभिर्द्वे व्यजायत ।
रोहिणीं नाम भद्रं ते गन्धर्वीं च यशस्विनीम् ॥ २७ ॥

रोहिण्यजनयद्गा वै गन्धर्वी वाजिनस्सुतान् ।
सुरसाऽजनयन्नागान्नाम कद्रूस्तु पन्नगान् ॥ २८ ॥

मनुर्मनुष्याञ्जनयद्रामः पुत्रान्यशस्विनः ।
ब्राह्मणान् क्षत्रियान्वैश्याञ्छूद्रांश्च मनुजर्षभ ॥ २९ ॥

मुखतो ब्राह्मणा जाता
बाहुभ्यां क्षत्रियास्तथा
ऊरुभ्यां जज्ञिरेवैश्याः
पद्भ्यां शूद्रा इति श्रुतिः ॥ ३० ॥

सर्वान्पुण्यफलान्वृक्षाननलाऽपि व्यजायत ।
जज्ञे राम महाबाहो तांश्च सर्वान्महीरुहान् ॥ ३१ ॥

विनता तु शुकीपौत्री कद्रूश्च सुरसास्वसा ।
कद्रूर्नागं सहस्रास्यं विजज्ञे धरणीधरम् ॥ ३२ ॥

द्वौ पुत्रौ विनतायास्तु गरुडोऽरुण एव च ।
तस्माज्जातोऽहमरुणात्सम्पातिस्तु ममाग्रजः ।
जटायुरिति मां विद्धि श्येनीपुत्रमरिन्दम ॥ ३३ ॥

सोऽहं राम सहायस्ते भविष्यामि यदीच्छसि ।
इदं दुर्गं हि कान्तारं मृगराक्षससेवितम् ॥ ३४ ॥

सीतां च तात रक्षिष्ये त्वयि याते सलक्ष्मणे ॥ ३५ ॥

जटायुषं तु प्रतिपूज्य राघवो
मुदा परिष्वज्य च सन्नतोऽभवत् ।
पितुर्हि शुश्राव सखित्वमात्मवान्
जटायुषा संकथितं पुनः पुनः ॥ ३६ ॥

स तत्र सीतां परिदाय मैथिलीं
सहैव तेनातिबलेन पक्षिणा ।
जगाम तां पञ्चवटीं सलक्ष्मणो
रिपून्दिधक्षन् शलभानिवानलः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे चतुर्दशः सर्गः ॥

आदितः श्लोकाः ७२२२ आरण्यकाण्डे आदितः श्लोकाः ५१०

## पञ्चदशः सर्गः

### पर्णशालानिर्माणम् ॥

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ।
उवाच भ्रातरं रामस्सौमित्रिं दीप्ततेजसम् ॥ १ ॥

आगताः स्म यथोद्दिष्टममुं देशं महर्षिणा ।
अयं पञ्चवटीदेशस्सौम्य पुष्पितपादपः ॥ २ ॥

सर्वतश्चार्यतां दृष्टिः कानने निपुणो ह्यसि ।
आश्रमः कतरस्मिन्नो देशे भवति संमतः ॥ ३ ॥

रमते यत्र वैदेही त्वमहं चैव लक्ष्मण ।
तादृशो दृश्यतां देशस्सन्निकृष्टजलाशयः ॥ ४ ॥

वनरामण्यकं यत्र जलरामण्यकं तथा ।
सन्निकृष्टं च यत्र स्यात् समित्पुष्पकुशोदकम् ॥ ५ ॥

एवमुक्तस्तु रामेण लक्ष्मणस्संयताञ्जलिः
सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीत् ॥ ६ ॥

परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते ।
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥ ७ ॥

सुप्रीतस्तेन वाक्येन लक्ष्मणस्य महा ुतिः ।
विमृशन्रोचयामास देशं सर्वगुणान्वितम् ॥ ८ ॥

स तं रुचिरमाक्रम्य देशमाश्रमकर्मणि ।
हस्ते गृहीत्वा हस्तेन रामस्सौमित्रिमब्रवीत् ॥ ९ ॥

अयं देशस्समः श्रीमान् पुष्पितैस्तरुभिर्वृतः ।
इहाश्रमपदं सौम्य यथावत्कर्तुमर्हसि ॥ १० ॥

इयमादित्यसङ्काशैः पद्मैस्सुरभिगन्धिभिः ।
अदूरे दृश्यते रम्या पद्मिनी पद्मसेविता ॥ ११ ॥

यथाऽऽख्यातमगस्त्येन मुनिना भावितात्मना ।
इयं गोदावरी रम्या पुष्पितैस्तरुभिर्वृता ॥ १२ ॥

हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता ॥ १३ ॥

नातिदूरेण चासन्ने मृगयूथावपीडिताः ।
मयूरनादिता रम्याः प्रांशवो बहुकन्दराः ॥ १४ ॥

दृश्यन्ते गिरयस्सौम्य पुष्पितैस्तरुभिर्वृताः ॥ १५ ॥

सौवर्णै राजतैस्ताम्रैर्देशे देशे च धातुभिः ।
गवाक्षिता इवाभान्ति गजाः परमभक्तिभिः ॥ १६ ॥

सालैस्तालैस्तमालैश्च खर्जूरपनसाम्रकैः ।
निवारैस्तिमिशैश्चैव पुन्नागैश्चोपशोभितः ॥ १७ ॥

चूतैरशोकैस्तिलकैश्चम्पकैः केतकैरपि ।
पुष्पगुल्मलतोपेतैस्तैस्तैस्तरुभिरावृताः ॥ १८ ॥

चन्दनैः स्पन्दनैर्नीपैः पर्णासैर्लिकुचैरपि ।
धवाश्वकर्णखदिरैश्शमी किंशुकपाटलैः ॥ १९ ॥

इदं पुण्यमिदं मेध्यमिदं बहुमृगद्विजम् ।
इह वत्स्यामि सौमित्रे सार्धमेतेन पक्षिणा ॥ २० ॥

एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ।
अचिरेणाश्रमं भ्रातुश्चकार सुमहाबलः ॥ २१ ॥

पर्णशालां सुविपुलां तत्र सङ्घातमृत्तिकाम् ।
सुस्तम्भां मस्करैर्दीर्घैः कृतवंशां सुशोभनाम् ॥ २२ ॥

शमीशाखाभिरास्तीर्य दृढपाशावपाशिताम् ।
कुशकाशशरैः पर्णैस्सुपरिच्छादितां तथा ॥ २३ ॥

समीकृततलां रम्यां चकार लघुविक्रमः ।
निवासं राघवस्यार्थे प्रेक्षणीयमनुत्तमम् ॥ २४ ॥

स गत्वा लक्ष्मणः श्रीमान्नदीं गोदावरीं तदा ।
स्नात्वा पद्मानि चादाय सफलः पुनरागतः ॥ २५ ॥

ततः पुष्पबलिं कृत्वा शान्तिं च स यथाविधि ।
दर्शयामास रामाय तदाश्रमपदं कृतम् ॥ २६ ॥

स तं दृष्ट्वा कृतं सौम्यमाश्रमं सह सीतया ।
राघवः पर्णशालायां हर्षमाहारयत्परम् ॥ २७ ॥

स संहृष्टः परिष्वज्य बाहुभ्यां लक्ष्मणं तदा ।
अतिस्निग्धं च गाढं च वचनं चेदमब्रवीत् ॥ २८ ॥

प्रीतोऽस्मि ते महत्कर्म त्वया कृतमरिन्दम ।
प्रदेयो यन्निमित्तं ते परिष्वङ्गो मया कृतः ॥ २९ ॥

भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण ।
त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥ ३० ॥

एवं लक्ष्मणमुक्त्वा तु राघवो लक्ष्मिवर्द्धनः ।
तस्मिन्देशे बहुफले न्यवसत्सुसुखं सुखी ॥ ३१ ॥

कञ्चित्कालं स धर्मात्मा सीतया लक्ष्मणेन च ।
अन्वास्यमानो न्यवसत् स्वर्गलोके यथाऽमरः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे पञ्चदशः सर्गः ॥

आदितः श्लोकाः ७२९८ आरण्यकाण्डे आदितः श्लोकाः ५८६

## षोडशः सर्गः

हेमन्तर्तुवर्णनम् ॥

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तते ॥ १ ॥

स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥

प्रह्वः कलशहस्तस्तं सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥

अयं स कालस्संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलङ्कृत इवाभाति येन संवत्सरश्शुभः ॥ ४ ॥

नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥

नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥

प्राज्यकामा जनपदास्सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रास्था विजिगीषवः ॥ ७ ॥

सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ८ ॥

प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ९ ॥

अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतस्सुखाः ।
दिवसास्सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥

मृदुसूर्यास्सनीहाराः
पटुशीतास्समारुताः ।
शून्यारण्या हिमध्वस्ता
दिवसा भान्ति साम्प्रतम् ॥ ११ ॥

निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीताः वृद्धतरायामास्त्रियामा यान्ति साम्प्रतम् ॥ १२ ॥

रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥

ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न तु शोभते ॥ १४ ॥

प्रकृत्या शीतलस्पर्शो हिमविद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥

बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥

खर्जूरपुष्पाकृतिभिश्शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदानम्राश्शालयः कनकप्रभाः ॥ १७ ॥

निमग्नाः कर्णिकाग्रेषु शूकैः कनकपिङ्गलैः ।
गन्धान् केदारपद्मानां जिघ्रन्ति वनशालयः ॥ १८ ॥

मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितस्सूर्यश्शशाङ्क इव लक्ष्यते ॥ १९ ॥

अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतस्सुखः ।
संरक्तः किञ्चिदापाण्डुरातपश्शोभते क्षितौ ॥ २० ॥

अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २१ ॥

संस्पृशन्विपुलं शीतमुदकं द्विरदस्सुखम् ।
अत्यर्थं तृषितो वन्यः प्रतिसंहरते करम् ॥ २२ ॥

एते हि समुपासीना विहगा जलचारिणः ।
न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २३ ॥

अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २४ ॥

बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकैस्तीरैस्सरितो भान्ति साम्प्रतम् ॥ २५ ॥

तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २६ ॥

जराजर्झरितैः पर्णैश्शीर्णकेसरकर्णिकैः ।
नालशेषैर्हिमध्वस्तैर्न भान्ति कमलाकराः ॥ २७ ॥

अस्मिंस्तु पुरुषव्याघ्रः काले दुःखसमन्वितः ।
तपश्चरति धर्मात्मा त्वद्भक्त्या भरतः पुरे ॥ २८ ॥

त्यक्त्वा राज्यं च मानं च भोगांश्च विविधान् बहून् ।
तपस्वी नियताहारश्शेते शीते महीतले ॥ २९ ॥

सोऽपि वेलामिमां नूनमभिषेकार्थमुद्यतः ।
वृतः प्रकृतिभिर्नित्यं प्रयाति सरयूं नदीम् ॥ ३० ॥

अत्यन्तसुखसंवृद्धः सुकुमारो हिमार्दितः ।
कथं त्वपररात्रेषु सरयूमवगाहते ॥ ३१ ॥

पद्मपत्रेक्षणः श्यामः श्रीमान् निरुदरो महान् ।
धर्मज्ञः सत्यवादी च ह्रीनिषेधो जितेन्द्रियः ॥ ३२ ॥

प्रियाभिभाषी मधुरो दीर्घबाहुररिन्दमः ।
सन्त्यज्य विविधान् भोगानार्यं सर्वात्मना श्रितः ॥ ३३ ॥

जितः स्वर्गस्तव भ्राता भरतेन महात्मना ।
वनस्थमपि तापस्ये यस्त्वामनुविधीयते ॥ ३४ ॥

न पित्र्यमनुवर्तन्ते मातृकं द्विपदा इति ।
ख्यातो लोकप्रवादोऽयं भरतेनान्यथा कृतः ॥ ३५ ॥

भर्ता दशरथो यस्यास्साधुश्च भरतस्सुतः ।
कथं नु साऽम्बा कैकेयी तादृशी क्रूरदर्शिनी ॥ ३६ ॥

इत्येवं लक्ष्मणे वाक्यं स्नेहाद्ब्रुवति धार्मिके ।
परिवादं जनन्यास्तमसहन्राघवोऽब्रवीत् ॥ ३७ ॥

न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन ।
तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥ ३८ ॥

निश्चिताऽपि हि मे बुद्धिर्वनवासे दृढव्रता ।
भरतस्नेहसन्तप्ता बालिशीक्रियते पुनः ॥ ३९ ॥

संस्मराम्यस्य वाक्यानि प्रियाणि मधुराणि च ।
हृद्यान्यमृतकल्पानि मनःप्रह्लादनानि च ॥ ४० ॥

कदा ह्यहं समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥ ४१ ॥

इत्येवं विलपंस्तत्र प्राप्य गोदावरीं नदीम् ।
चक्रेऽभिषेकं काकुत्स्थस्सानुजस्सह सीतया ॥ ४२ ॥

तर्पयित्वाऽथ सलिलैस्ते पितॄन्देवता अपि ।
स्तुवन्ति स्मोदितं सूर्यं देवताश्च समाहिताः ॥ ४३ ॥

कृताभिषेकः स रराज रामः
सीता द्वितीयः सहलक्ष्मणेन ।
कृताभिषेकस्त्वगराजपुत्र्या
रुद्रस्सनन्दी भगवानिवेशः ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे षोडशः सर्गः ॥

आदितः श्लोकाः ७२९८ आरण्यकाण्डेआदितः श्लोकाः ५८६

## सप्तदशः सर्गः ॥

### शूर्पणखागमनम् ।

कृताभिषेको रामस्तु सीता सौमित्रिरेव च ।
तस्माद्गोदावरीतीरात्ततो जग्मुस्स्वमाश्रमम् ॥ १ ॥

आश्रमं तमुपागम्य राघवस्सह लक्ष्मणः ।
कृत्वा पौर्वाह्णिकं कर्म पर्णशालामुपागमत् ॥ २ ॥

उवास सुखितस्तत्र पूज्यमानो महर्षिभिः ।
लक्ष्मणेन सह भ्रात्रा चकार विविधाः कथाः ॥ ३ ॥

स रामः पर्णशालायामासीनस्सह सीतया ।
विरराज महाबाहुश्चित्रया चन्द्रमा इव ॥ ४ ॥

तथाऽऽसीनस्य रामस्य कथासंसक्तचेतसः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ ५ ॥

सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम् ॥ ६ ॥

सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणम् ।
आजानुबाहुं दीप्तास्यमतीव प्रियदर्शनम् ॥ ७ ॥

गजविक्रान्तगमनं जटामण्डलधारिणम् ।
सुकुमारं महासत्त्वं पार्थिवव्यञ्जनान्वितम् ॥ ८ ॥

राममिन्दीवरश्यामं कन्दर्पसदृशप्रभम् ।
बभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ॥ ९ ॥

सुमुखं दुर्मुखी रामं वृत्तमध्यं महोदरी ।
विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा ॥ १० ॥

प्रीतिरूपं विरूपा सा सुस्वरं भैरवस्वरा ।
तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी ॥ ११ ॥

न्यायवृत्तं सुदुर्वृत्ता प्रियमप्रियदर्शना ।
शरीरजसमाविष्टा राक्षसी राममब्रवीत् ॥ १२ ॥

जटी तापसरूपेण सभार्यश्शरचापधृत् ।
आगतस्त्वमिमं देशं कथं राक्षससेवितम् ।
किमागमनकार्यं ते तत्त्वमाख्यातुमर्हसि ॥ १३ ॥

एवमुक्तस्तु राक्षस्या शूर्पणख्या परन्तपः ।
ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे ॥ १४ ॥

अनृतं न हि रामस्य कदाचिदपि संमतम् ।
विशेषेणाऽऽश्रमस्थस्य समीपे स्त्रीजनस्य च ॥ १५ ॥

आसीद्दशरथो नाम राजा त्रिदशविक्रमः ।
तस्याऽहमग्रजः पुत्रो रामो नाम जनैः श्रुतः ॥ १६ ॥

भ्राताऽयं लक्ष्मणो नाम यवीयान्मामनुव्रतः ।
इयं भार्या च वैदेही मम सीतेति विश्रुता ॥ १७ ॥

नियोगात्तु नरेन्द्रस्य पितुर्मातुश्च यन्त्रितः ।
धर्मार्थं धर्मकांक्षी च वनं वस्तुमिहागतः ॥ १८ ॥

त्वां तु वेदितुमिच्छामि कथ्यतां काऽसि कस्य वा ॥

न हि तावन्मनोज्ञाङ्गी राक्षसी प्रतिभासि मे ।
इह वा किन्निमित्तं त्वमागता ब्रूहि तत्त्वतः ॥ २० ॥

साऽब्रवीद्वचनं श्रुत्वा राक्षसी मदनातुरा ।
श्रूयतां राम वक्ष्यामि तत्त्वार्थं वचनं मम ॥ २१ ॥

अहं शूर्पणखा नाम राक्षसी कामरूपिणी ।
अरण्यं विचरामीदमेका सर्वभयङ्करा ॥ २२ ॥

रावणो नाम मे भ्राता राक्षसो राक्षसाधिपः ।
वीरो विश्रवसः पुत्रो यदि ते श्रोत्रमागतः ॥ २३ ॥

प्रवृद्धनिद्रश्च तथा कुम्भकर्णो महाबलः ।
विभीषणश्च धर्मात्मा न तु राक्षसचेष्टितः ॥ २४ ॥

प्रख्यातवीर्यौ च रणे भ्रातरौ खरदूषणौ ।
तानहं समतिक्रान्ता राम त्वा पूर्वदर्शनात् ॥ २५ ॥

समुपेताऽस्मि भावेन भर्तारं पुरुषोत्तमम् ॥ २६ ॥

अहं प्रभावसम्पन्ना स्वच्छन्दबलगामिनी ।
चिराय भव मे भर्ता सीतया किं करिष्यसि ॥ २७ ॥

विकृता च विरूपा च न चेयं सदृशी तव ।
अहमेवाऽनुरूपा ते भार्यारूपेण पश्य माम् ॥ २८ ॥

इमां विरूपामसतीं करालां निर्णतोदरीम् ।
अनेन सह ते भ्राता भक्षयिष्यामि मानुषीम् ॥ २९ ॥

ततः पर्वतशृङ्गाणि वनानि विविधानि च ।
पश्यन् सह मया कामी दण्डकान्विचरिष्यसि ॥ ३० ॥

इत्येवमुक्त्वा काकुत्स्थं प्रहस्य मदिरेक्षणा ।
देवी लक्ष्मणमध्ये तु बभूवावस्थिता पुनः ॥ ३१ ॥

संप्रहासनिमित्तं तु रामश्शूर्पणखां ततः ।
इदं वचनमारेभे वक्तुं वाक्यविशारदः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे सप्तदशः सर्गः ॥

आदितः श्लोकाः ७३३० आरण्यकाण्डे आदितः श्लोकाः ६१८

## अष्टादशः सर्गः ॥

शूर्पणखायाः कर्णनासाच्छेदनम् ।

तां तु शूर्पणखां रामः कामपाशावपाशिताम् ।
स्वच्छया श्लक्ष्णया वाचा स्मितपूर्वमथाब्रवीत् ॥ १ ॥

कृतदारोऽस्मि भवति भार्येयं दयिता मम ।
त्वद्विधानां तु नारीणां सुदुःखा ससपत्नता ॥ २ ॥

अनुजस्त्वेष मे भ्राता शीलवान्प्रियदर्शनः ।
श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान् ॥ ३ ॥

अपूर्वी भार्यया चार्थी तरुणः प्रियदर्शनः ।
अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति ॥ ४ ॥

एनं भज विशालाक्षि भर्तारं भ्रातरं मम ।
असपत्ना वरारोहे मेरुमर्कप्रभा यथा ॥ ५ ॥

इति रामेण सा प्रोक्ता राक्षसी काममोहिता ।
विसृज्य रामं सहसा ततो लक्ष्मणमब्रवीत् ॥ ६ ॥

अस्य रूपस्य ते युक्ता भार्याऽहं वरवर्णिनी ।
मया सह सुखं सर्वान्दण्डकान्विचरिष्यसि ॥ ७ ॥

एवमुक्तस्तु सौमित्री राक्षस्या वाक्यकोविदः ।
ततः शूर्पणखां स्मित्वा लक्ष्मणो वाक्यमब्रवीत् ॥ ८ ॥

कथं दासस्य मे दासी भार्या भवितुमिच्छसि ।
सोऽहमार्येण परवान् भ्रात्रा कमलवर्णिनि ॥ ९ ॥

समृद्धार्थस्य सिद्धार्था मुदिता कामरूपिणी ।
आर्यस्य त्वं विशालाक्षि भार्या भव यवीयसी ॥ १० ॥

एनां विरूपामसतीं करालां निर्णतोदरीम् ।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति ॥ ११ ॥

कोऽहि रूपमिदं श्रेष्ठं सन्त्यज्य वरवर्णिनि ।
मानुषीषु वरारोहे कुर्याद्भावं विचक्षणः ॥ १२ ॥

इति सा लक्ष्मणेनोक्ता कराला निर्णतोदरी ।
मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा ॥ १३ ॥

सा रामं पर्णशालायामुपविष्टं परन्तपम् ।
सीतया सह दुर्धर्षमब्रवीत्काममोहिता ॥ १४ ॥

इमां विरूपामसतीं करालां निर्णतोदरीम् ।
वृद्धां भार्यामवष्टभ्य मां त्वं न बहुमन्यसे ॥ १५ ॥

अद्येमांभक्षयिष्यामि पश्यतस्तव मानुषीम् ।
त्वया सह चरिष्यामि निःसपत्ना यथासुखम् ॥ १६ ॥

इत्युक्त्वा मृगशावाक्षीमलातसदृशेक्षणा ।
अभ्यधावत्सुसङ्क्रुद्धा महोल्का रोहिणीमिव ॥ १७ ॥

तां मृत्युपाशप्रतिमामापतन्तीं महाबलः ।
निगृह्य रामः कुपितस्ततो लक्ष्मणमब्रवीत् ॥ १८ ॥

क्रूरैरनार्यैस्सौमित्रे परिहासः कथञ्चन ।
न कार्यः पश्य वैदेहीं कथञ्चित्सौम्य जीवतीम् ॥ १९ ॥

इमां विरूपामसतीमतिमत्तां महोदरीम् ।
राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि ॥ २० ॥

इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्यपश्यतः ।
उद्धृत्य खड्गं चिच्छेद कर्णनासं महाबलः ॥ २१ ॥

निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव घोरा शूर्पणखा वनम् ॥ २२ ॥

सा विरूपा महाघोरा राक्षसी शोणितोक्षिता ।
ननाद विविधान्नादान् यथा प्रावृषि तोयदः ॥ २३ ॥

सा विक्षरन्ती रुधिरं बहुधा घोरदर्शना ।
प्रगृह्य बाहू गर्जन्ती प्रविवेश महावनम् ॥ २४ ॥

ततस्तु सा राक्षससङ्घसंवृतं
खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रदर्शनं
पपात भूमौ गगनाद्यथाऽशनिः ॥ २५ ॥

ततः सभार्यं भयमोहमूर्च्छिता
सलक्ष्मणं राघवमागतं वनम् ।
विरूपणं चात्मनि शोणितोक्षिता
शशंस सर्वं भगिनी खरस्य सा ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे अष्टादशः सर्गः ॥

आदितः श्लोकाः ७३५६ आरण्यकाण्डे आदितः श्लोकाः ६४४

## एकोनविंशः सर्गः

खरसमीपे अङ्गवैरूप्यकथनम् ॥

तां तथा पतितां दृष्ट्वा विरूपां शोणितोक्षिताम् ।
भगिनीं क्रोधसन्तप्तः खरः पप्रच्छ राक्षसः ॥ १ ॥

उत्तिष्ठ तावदाख्याहि प्रमोहं जहि सम्भ्रमम् ।
व्यक्तमाख्याहि केन त्वमेवंरूपा विरूपिता ॥ २ ॥

कः कृष्णसर्पमासीनमाशीविषमनागसम् ।
तुदत्यभिसमापन्नमङ्गुल्यग्रेण लीलया ॥ ३ ॥

कः कालपाशमासज्य कण्ठे मोहान्न बुध्यते ।
यस्त्वामद्य समासाद्य पीतवान्विषमुत्तमम् ॥ ४ ॥

बलविक्रमसम्पन्ना कामगा कामरूपिणी ।
इमामवस्थां नीता त्वं केनान्तकसमा मता ॥ ५ ॥

देवगन्धर्वभूतानामृषीणां च महात्मनाम् ।
कोऽयमेवं महावीर्यस्त्वां विरूपां चकार ह ॥ ६ ॥

न हि पश्याम्यहं लोके यः कुर्यान्मम विप्रियम् ।
अमरेषु सहस्राक्षं महेन्द्रं पाकशासनम् ॥ ७ ॥

अद्याहं मार्गणैः प्राणानादास्ये जीवितान्तकैः ।
सलिले क्षीरमासक्तं निष्पिबन्निव सारसः ॥ ८ ॥

निहतस्य मया सङ्ख्ये शरसङ्कृत्तमर्मणः ।
सफेनं रुधिरं रक्तं मेदिनी कस्य पास्यति ॥ ९ ॥

कस्य पत्ररथाः कायान्मांसमुत्कृत्य सङ्गताः ।
प्रहृष्टा भक्षयिष्यन्ति निहतस्य मया रणे ॥ १० ॥

तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
मयाऽपकृष्टं कृपणं शक्तास्त्रातुं महाहवे ॥ ११ ॥

उपलभ्य शनैस्संज्ञां तं मे शंसितुमर्हसि ।
येन त्वं दुर्विनीतेन वने विक्रम्य निर्जिता ॥ १२ ॥

इति भ्रातुर्वचः श्रुत्वा क्रुद्धस्य च विशेषतः ।
ततश्शूर्पणखा वाक्यं सबाष्पमिदमब्रवीत् ॥ १३ ॥

तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १४ ॥

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ॥ १६ ॥

गन्धर्वराजप्रतिमौ पार्थिवव्यञ्जनान्वितौ ।
देवौ वा मानुषौ वा तौ न तर्कयितुमुत्सहे ॥ १७ ॥

तरुणी रूपसम्पन्ना सर्वाभरणभूषिता ।
दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा ॥ १८ ॥

ताभ्यामुभाभ्यां सम्भूय प्रमदामधिकृत्य ताम् ।
इमामवस्थां नीताऽहं यथाऽनाथाऽसती तथा ॥ १९ ॥

तस्याश्चानृजुवृत्तायास्तयोश्च हतयोरहम् ।
सफेनं पातुमिच्छामि रुधिरं रणमूर्धनि ॥ २० ॥

एष मे प्रथमः कामः कृतस्तात त्वया भवेत् ।
तस्यास्तयोश्च रुधिरं पिबेयमहमाहवे ॥ २१ ॥
इति तस्यां ब्रुवाणायां चतुर्दश महाबलान् ।
व्यादिदेश खरः क्रुद्धो राक्षसानन्तकोपमान् ॥ २२ ॥
मानुषौ शस्त्रसम्पन्नौ चीरकृष्णाजिनाम्बरौ ।
प्रविष्टौ दण्डकारण्यं घोरं प्रमदया सह ॥ २३ ॥
तौ हत्वा तां च दुर्वृत्तामपावर्तितुमर्हथ ।
इयं च रुधिरं तेषां भगिनी मम पास्यति ॥ २४ ॥
मनोरथोऽयमिष्टोऽस्या भगिन्या मम राक्षसाः ।
शीघ्रं सम्पाद्यतां गत्वा तौ प्रमथ्य स्वतेजसा ॥ २५ ॥
युष्माभिर्निहतौ दृष्ट्वा तावुभौ भ्रातरौ रणे ।
इयं प्रहृष्टा मुदिता रुधिरं युधि पास्यति ॥ २६ ॥
इति प्रतिसमादिष्टा राक्षसास्ते चतुर्दश ।
तत्र जग्मुस्तया सार्धं घना वातेरिता यथा ॥ २७ ॥
ततस्तु ते तं समुदग्रतेजसं
तथा सुतीक्ष्णप्रदराश्च राक्षसाः ।
दुरासदं धर्षयितुं न चाशकन्
वनद्विपा दीप्तमिवाग्निमुद्धतम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे एकोनविंशः सर्गः ॥

आदितः श्लोकाः ७३८४ आरण्यकाण्डे आदितः श्लोकाः ६७२

## विंशः सर्गः

### चतुर्दशराक्षसवधः ॥

ततः शूर्पणखा घोरा राघवाश्रममागता ।
रक्षसामाचचक्षे तौ भ्रातरौ सह सीतया ॥ १ ॥

ते रामं पर्णशालायामुपविष्टं महाबलम् ।
ददृशुः सीतया सार्धं वैदेह्या लक्ष्मणेन च ॥ २ ॥

तान्दृष्ट्वा राघवः श्रीमानागतां तां च राक्षसीम् ।
अब्रवीद्भ्रातरं रामो लक्ष्मणं दीप्ततेजसम् ॥ ३ ॥

मुहूर्तं भव सौमित्रे सीतायाः प्रत्यनन्तरः ।
इमानस्या वधिष्यामि पदवीमागतानिह ॥ ४ ॥

वाक्यमेतत्ततः श्रुत्वा रामस्य विदितात्मनः ।
तथेति लक्ष्मणो वाक्यं रामस्य प्रत्यपूजयत् ॥ ५ ॥

राघवोऽपि महच्चापं चामीकरविभूषितम् ।
चकार सज्यं धर्मात्मा तानि रक्षांसि चाब्रवीत् ॥ ६ ॥

पुत्रौ दशरथस्तावां भ्रातरौ रामलक्ष्मणौ ।
प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम् ॥ ७ ॥

फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ ।
वसन्तौ दण्डकारण्ये किमर्थमुपहिंसथ ॥ ८ ॥

युष्मान् पापात्मकान् हन्तुं विप्रकारान्महाहवे ।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥ ९ ॥

तिष्ठतैवात्र सन्तुष्टा नोपावर्तितुमर्हथ ।
यदि प्राणैरिहार्थो वा निवर्तध्वं निशाचराः ॥ १० ॥

तस्य तद्वचनं श्रुत्वा राक्षसास्ते चतुर्दश ।
ऊचुर्वाचं सुसङ्क्रुद्धा ब्रह्मघ्नाश्शूलपाणयः ॥ ११ ॥

संरक्तनयना घोरा रामं रक्तान्तलोचनम् ।
परुषा मधुरभाषं हृष्टा दृष्टपराक्रमम् ॥ १२ ॥

क्रोधमुत्पाद्य नो भर्तुः खरस्य सुमहात्मनः ।
त्वमेव हास्यसे प्राणानद्यास्माभिर्हतो युधि ॥ १३ ॥

का हि ते शक्तिरेकस्य बहूनां रणमूर्धनि ।
अस्माकमग्रतः स्थातुं किं पुनर्योद्धुमाहवे ॥ १४ ॥

एभिर्बाहुविमुक्तैर्नः परिघैश्शूलपट्टसैः ।
प्राणांस्त्यक्ष्यसि वीर्यं च धनुश्च करपीडितम् ॥ १५ ॥

इत्येवमुक्त्वा संरब्धा राक्षसास्ते चतुर्दश ।
चिक्षिपुस्तानि शूलानि राघवं प्रति दुर्जयम् ॥ १६ ॥

तानि शूलानि काकुत्स्थस्समस्तानि चतुर्दश ।
तावद्भिरेव चिच्छेद शरैः काञ्चनभूषितैः ॥ १७ ॥

ततः पश्चान्महातेजा नाराचान् सूर्यसन्निभान् ।
जग्राह परमक्रुद्धश्चतुर्दश शिलाशितान् ॥ १८ ॥

गृहीत्वा धनुरायम्य लक्ष्यानुद्दिश्य राक्षसान् ।
मुमोच राघवो बाणान् वज्रानिव शतक्रतुः ॥ १९ ॥

रुक्मपुङ्खाश्च विशिखाः प्रदीप्ता हेमभूषणाः ॥ २० ॥
ते भित्वा रक्षसां वेगाद्वक्षांसि रुधिराप्लुताः ।
विनिष्पेतुस्तदा भूमौ न्यमज्जन्ताशनिस्वनाः ॥ २१ ॥
तैर्भिन्नहृदया भूमौ छिन्नमूला इव द्रुमाः ।
निपेतुश्शोणितस्नाता विकृता विगतासवः ॥ २२ ॥
तान् भूमौ पतितान् दृष्ट्वा राक्षसी क्रोधमूर्च्छिता ।
परित्रस्ता पुनस्तत्र व्यसृजद्भैरवस्वनान् ॥ २३ ॥
सा नदन्ती महानादं जवाच्छूर्पणखा पुनः ॥ २४ ॥
उपगम्य खरं सा तु किञ्चित्संशुष्कशोणिता ।
पपात पुनरेवार्ता सनिर्यासेव वल्लरी ॥ २५ ॥
भ्रातुस्समीपे शोकार्ता ससर्ज निनदं मुहुः ।
भूमौ शयाना दुःखार्ता लब्धसंज्ञा चिरात्पुनः ॥
सस्वरं मुमुचे बाष्पं विषण्णवदना तदा ॥ २६ ॥

निपातितान् प्रेक्ष्य रणे तु राक्षसान्
प्रधाविता शूर्पणखा पुनस्ततः ।
वधं च तेषां निखिलेन रक्षसां
शशंस सर्वं भगिनी खरस्य सा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे विंशः सर्गः ॥

आदितः श्लोकाः ७४११ आरण्यकाण्डे आदितः श्लोकाः ६९९

## एकविंशः सर्गः

### खराय राक्षसवधकथनम् ॥

स पुनः पतितां दृष्ट्वा क्रोधाच्छूर्पणखां खरः ।
उवाच व्यक्तया वाचा तामनर्थार्थमागताम् ॥ १ ॥

मया त्विदानीं शूरास्ते राक्षसा रुधिराशनाः ।
त्वत्प्रियार्थं विनिर्दिष्टाः किमर्थं रुद्यते पुनः ॥ २ ॥

भक्ताश्चैवानुरक्ताश्च हिताश्च मम नित्यशः ।
हन्यमाना न हन्यन्ते न न कुर्युर्वचो मम ॥ ३ ॥

किमेतच्छ्रोतुमिच्छामि कारणं यत्कृते पुनः ।
हा नाथेति विनर्दन्ती सर्पवद्वेष्टसे क्षितौ ॥ ४ ॥

अनाथवद्विलपसि किं नु नाथे मयि स्थिते ।
उत्तिष्ठोत्तिष्ठ मामेवं वैक्लब्यं त्यज्यतामिह ॥ ५ ॥

सा त्वेवमुक्ता दुर्धर्षा खरेण परिसान्त्विता ।
विमृज्य नयने सास्रे खरं भ्रातरमब्रवीत् ॥ ६ ॥

अस्मीदानीमहं प्राप्ता हृतश्रवणनासिका ।
शोणितौघपरिक्लिन्ना त्वया च परिसान्त्विता ॥ ७ ॥

प्रेषिताश्च त्वया शूरा राक्षसास्ते चतुर्दश ।
निहन्तुं राघवं घोरं मत्प्रियार्थं सलक्ष्मणम् ॥ ८ ॥

ते तु रामेण सामर्षाश्शूलपट्टिशपाणयः ।
समरे निहतास्सर्वे सायकैर्मर्मभेदिभिः ॥ ९ ॥

तान् भूमौ पतितान् दृष्ट्वा क्षणेनैव महाबलान् ।
रामस्य च महत्कर्म महांस्त्रासोऽभवन्मम ॥ १० ॥

साऽस्मि भीता समुद्विग्ना विषण्णा च निशाचर ।
शरणं त्वां प्रपन्नाऽहं सर्वतो भयदर्शिनी ॥ ११ ॥

विषादनक्राध्युषिते परित्रासोर्मिमालिनि ।
किं मां न त्रायसे मग्नां विपुले शोकसागरे ॥ १२ ॥

एते च निहता भूमौ रामेण निशितैश्शरैः ।
ये च मे पदवीं प्राप्ता राक्षसाः पिशिताशनाः ॥ १३ ॥

मयि ते यद्यनुक्रोशो यदि रक्षस्सु तेषु च ।
दण्डकारण्यनिलयं जहि राक्षसकण्टकम् ॥ १४ ॥

यदि रामममित्रघ्नं न त्वमद्य वधिष्यसि ।
तव चैवाग्रतः प्राणांस्त्यक्ष्यामि निरपत्रपा ॥ १५ ॥

बुद्ध्याऽहमनुपश्यामि न त्वं रामस्य संयुगे ।
स्थातुं प्रतिमुखे शक्तस्सचापस्य महात्मनः ॥ १६ ॥

शूरमानी न शूरस्त्वं मिथ्याऽऽरोपितविक्रमः ।
मानुषौ यौ न शक्नोषि हन्तुं तौ रामलक्ष्मणौ ॥ १७ ॥

रामेण यदि ते शक्तिस्तेजो वाऽस्ति निशाचर ।
दण्डकारण्यनिलयं जहि तं कुलपांसन ॥ १८ ॥

निस्सत्त्वस्याल्पवीर्यस्य वासस्ते कीदृशस्त्विह ।
अपयाहि जनस्थानात्त्वरितस्सह बान्धवैः ॥ १९ ॥

स हि तेजस्समायुक्तो रामो दशरथात्मजः ।
भ्राता चास्य महावीर्यो येन चास्मि विरूपिता ॥ २० ॥

रामतेजोभिभूतो हि त्वं क्षिप्रं विनशिष्यसि ॥ २१ ॥

एवं विलप्य बहुशो राक्षसी विततोदरी ।
भ्रातुस्समीपे दुःखार्ता नष्टसंज्ञा बभूव सा ।
कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे एकविंशः सर्गः ॥

आदितः श्लोकाः ७४३३ आरण्यकाण्डे आदितः श्लोकाः ७२१

इत्यार्षे श्रीमद्रामायणे दशमेऽह्नि वर्तमानकथाप्रसङ्गः ॥

## द्वाविंशः सर्गः

### खरस्य युद्धायागमनम् ॥

एवमाधर्षितः शूरः शूर्पणख्या खरस्ततः ।
उवाच रक्षसां मध्ये खरः खरतरं वचः ॥ १ ॥

तवावमानः प्रभवःक्रोधोऽयमतुलो मम ।
न शक्यते धारयितुं लवणाम्भ इवोत्थितम् ॥ २ ॥

न रामं गणये वीर्यान्मानुषं क्षीणजीवितम् ।
आत्मदुश्चरितैः प्राणान् हतो योऽद्य विमोक्ष्यति ॥

बाष्पः संह्रियतामेष सम्भ्रमश्च विमुच्यताम् ।
अहं रामं सह भ्रात्रा नयामि यमसादनम् ॥ ४ ॥

परश्वधहतस्याद्य मन्दप्राणस्य संयुगे ।
रामस्य रुधिरं रक्तमुष्णं पास्यसि राक्षसि ॥ ५ ॥

सा प्रहृष्टा वचः श्रुत्वा खरस्य वदनाच्च्युतम् ।
प्रशशंस पुनर्मौर्ख्याद्भ्रातरं रक्षसां वरम् ॥ ६ ॥

तया परुषितः पूर्वं पुनरेव प्रशंसितः ।
अब्रवीद्दूषणं नाम खरः सेनापतिं तदा ॥ ७ ॥

चतुर्दशसहस्राणि मम चित्तानुवर्तिनाम् ।
रक्षसां भीमवेगानां समरेष्वनिवर्तिनाम् ॥ ८ ॥

नीलजीमूतवर्णानां घोराणां क्रूरकर्मणाम् ।
लोकहिंसाविहाराणां बलिनामुग्रतेजसाम् ॥ ९ ॥

तेषां शार्दूलदर्पाणां महास्यानां महात्मनाम् ।
सर्वोद्योगमुदीर्णानां रक्षसां सौम्य कारय ॥ १० ॥

उपस्थापय मे क्षिप्रं रथं सौम्य धनूंषि च ।
शरांश्च चित्रान् खड्गांश्च शक्तिश्च विविधाः शिताः ॥ ११ ॥

अग्रे निर्यातुमिच्छामि पौलस्त्यानां महात्मनाम् ।
वधार्थं दुर्विनीतस्य रामस्य रणकोविदः ॥ १२ ॥

इति तस्य ब्रुवाणस्य सूर्यवर्णं महारथम् ।
सदश्वैः शबलैर्युक्तमाचचक्षेऽथ दूषणः ॥ १३ ॥

तं मेरुशिखराकारं तप्तकाञ्चनसन्निभम् ।
हेमचक्रमसंबाधं वैडूर्यमयकूबरम् ॥ १४ ॥

मत्स्यैः पुष्पैर्द्रुमैः शैलैश्चन्द्रसूर्यैश्च काञ्चनैः ।
मङ्गलैः पक्षिसङ्घैश्च ताराभिरभिसंवृतम् ॥ १५ ॥

ध्वजनिस्त्रिंशसम्पन्नं किङ्किणीजालभूषितम् ।
सदश्वयुक्तं सोऽमर्षादारुरोह रथं खरः ॥ १६ ॥

निशाम्य तु रथस्थं तं राक्षसा भीमविक्रमाः ।
तस्थुः सम्परिवार्यैनं दूषणं च महाबलम् ॥ १७ ॥

खरस्तु तान्महेष्वासान् घोरवर्मायुधध्वजान् ।
निर्यातेत्यब्रवीद्धृष्टो रथस्थः सर्वराक्षसान् ॥ १८ ॥

ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम् ।
निर्जगाम जनस्थानान्महानादं महाजवम् ॥ १९ ॥
मुद्गरैः पट्टिशैः शूलैः सुतीक्ष्णैश्च परश्वधैः ।
खड्गैश्चक्रैश्च हस्तस्थैर्भ्राजमानैश्च तोमरैः ॥ २० ॥
शक्तिभिः परिघैर्घोरैरतिमात्रैश्च कार्मुकैः ।
गदासिमुसलैर्वज्रैर्गृहीतैर्भीमदर्शनैः ॥ २१ ॥
राक्षसानां सुघोराणां सहस्राणि चतुर्दश ।
निर्यातानि जनस्थानात् खरचित्तानुवर्तिनाम् ॥ २२ ॥
तांस्तु निर्धावतो दृष्ट्वा राक्षसान् भीमदर्शनान् ।
खरस्यापि रथः किञ्चिज्जगाम तदनन्तरम् ॥ २३ ॥
ततस्ताञ्छबलानश्वांस्तप्तकाञ्चनभूषितान् ।
खरस्य मतमाज्ञाय सारथिः समचोदयत् ॥ २४ ॥
स चोदितो रथः शीघ्रं खरस्य रिपुघातिनः ।
शब्देनापूरयामास दिशश्च प्रदिशस्तथा ॥ २५ ॥

प्रवृद्धमन्युस्तु खरः खरस्वनो
रिपोर्वधार्थं त्वरितो यथाऽन्तकः ।
अचूचुदत् सारथिमुन्नदन् भृशं
महाबलो मेघ इवाश्मवर्षवान् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे द्वाविंशः सर्गः ॥

आदितः श्लोकाः **7459** आरण्यकाण्डे आदितः श्लोकाः **747**

## त्रयोविंशः सर्गः

### उत्पातदर्शनम् ॥

तं प्रयान्तं बलं घोरमशिवं शोणितोदकम् ।
अभ्यवर्षन्महामेघस्तुमुलो गर्दभारुणः ॥ १ ॥

निपेतुस्तुरगास्तस्य रथयुक्ता महाजवाः ।
समे पुष्पचिते देशे राजमार्गे यदृच्छया ॥ २ ॥

श्यामं रुधिरपर्यन्तं बभूव परिवेषणम् ।
अलातचक्रप्रतिमं परिगृह्य दिवाकरम् ॥ ३ ॥

ततो ध्वजमुपागम्य हेमदण्डं समुच्छ्रितम् ।
समाक्रम्य महाकायस्तस्थौ गृध्रः सुदारुणः ॥ ४ ॥

जनस्थानसमीपे तु समागम्य खरस्वनाः ।
विस्वरान् विविधांश्चक्रुर्मांसादा मृगपक्षिणः ॥ ५ ॥

व्याजह्रुश्च प्रदीप्तायां दिशि वै भैरवस्वनम् ।
अशिवं यातुधानानां शिवा घोरा महास्वनाः ॥ ६ ॥

प्रभिन्नगजसङ्काशास्तोयशोणितधारिणः ।
आकाशं तदनाकाशं चक्रुर्भीमा बलाहकाः ॥ ७ ॥

बभूव तिमिरं घोरमुद्धतं रोमहर्षणम् ।
दिशो वा विदिशो वाऽपि न च व्यक्तं चकाशिरे ॥ ८ ॥

क्षतजार्द्रसवर्णाभा सन्ध्या कालं विना बभौ ।
खरस्याभिमुखा नेदुस्तदा घोरमृगाः खगाः ॥ ९ ॥

कङ्कगोमायुगृध्राश्च चुक्रुशुर्भयशंसिनः ॥ १० ॥

नित्याशुभकरा युद्धे शिवा घोरनिदर्शनाः ।
नेदुर्बलस्याभिमुखं ज्वालोद्गारिभिराननैः ॥ ११ ॥

कबन्धः परिघाभासो दृश्यते भास्करान्तिके ।
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ १२ ॥

प्रवाति मारुतः शीघ्रं निष्प्रभोऽभूद्दिवाकरः ।
उत्पेतुश्च विना रात्रिं ताराः खद्योतसप्रभाः ॥ १३ ॥

संलीनमीनविहगा नलिन्यः शुष्कपङ्कजाः ।
तस्मिन् क्षणे बभूवुश्च विना पुष्पफलैर्द्रुमाः ॥ १४ ॥

उद्धूतश्च विना वातं रेणुर्जलधरारुणः ।
वीची कूचीति वाश्यन्त्यो बभूवुस्तत्र शारिकाः ॥ १५ ॥

उल्काश्चापि सनिर्घाता निपेतुर्घोरदर्शनाः ।
प्रचचाल मही सर्वा सशैलवनकानना ॥ १६ ॥

खरस्य च रथस्थस्य नर्दमानस्य धीमतः ।
प्राकम्पत भुजः सव्यः स्वरश्चास्यावसज्जत ॥ १७ ॥

सास्रा सम्पद्यते दृष्टिः पश्यमानस्य सर्वतः ।
ललाटे च रुजा जाता न च मोहान्न्यवर्तत ॥ १८ ॥

तान् समीक्ष्य महोत्पातानुत्थितान् रोमहर्षणान् ।
अब्रवीद्राक्षसान् सर्वान् प्रहसन् वाहिनीपतिः ॥ १९ ॥

महोत्पातानिमान् सर्वानुत्थितान् घोरदर्शनान् ।
न चिन्तयाम्यहं वीर्याद्बलवान् दुर्बलानिव ॥ २० ॥

तारा अपि शरैस्तीक्ष्णैः पातयामि नभःस्थलात् ।
मृत्युं मरणधर्मेण सङ्क्रुद्धो योजयाम्यहम् ॥ २१ ॥

राघवं तं बलोत्सिक्तं भ्रातरं चास्य लक्ष्मणम् ।
अहत्वा सायकैस्तीक्ष्णैर्नोपावर्तितुमुत्सहे ॥ २२ ॥

सकामा भगिनी मेऽस्तु पीत्वा तु रुधिरं तयोः ।
यन्निमित्तस्तु रामस्य लक्ष्मणस्य विपर्ययः ॥ २३ ॥

न क्वचित् प्राप्तपूर्वो मे संयुगेषु पराजयः ।
युष्माकमेतत्प्रत्यक्षं नानृतं कथयाम्यहम् ॥ २४ ॥

देवराजमपि क्रुद्धो मत्तैरावतयायिनम् ।
वज्रहस्तं रणे हन्यां किं पुनस्तौ कुमानुषौ ॥ २५ ॥

सा तस्य गर्जितं श्रुत्वा राक्षसस्य महाचमूः ।
प्रहर्षमतुलं लेभे मृत्युपाशावपाशिता ॥ २६ ॥

समीयुश्च महात्मानो युद्धदर्शनकाङ्क्षिणः ।
ऋषयो देवगन्धर्वाः सिद्धाश्च सह चारणैः ॥ २७ ॥

समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ॥ २८ ॥

स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां येऽभिसङ्गताः ।
जयतां राघवः सङ्ख्ये पौलस्त्यान् रजनीचरान् ।
चक्रहस्तो यथा युद्धे सर्वानसुरसत्तमान् ॥ २९ ॥

एतच्चान्यच्च बहुशो ब्रुवाणाः परमर्षयः ।
जातकौतूहलास्तत्र विमानस्थाश्च देवताः ॥
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ॥ ३० ॥

रथेन तु खरो वेगादुग्रसैन्यो विनिःसृतः ।
तं दृष्ट्वा राक्षसं भूयो राक्षसाश्च विनिःसृताः ॥ ३१ ॥

श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहङ्गमः ।
दुर्जयः करवीराक्षः परुषः कालकार्मुकः ॥ ३२ ॥

मेघमाली महामाली सर्पास्यो रुधिराशनः ।
द्वादशैते महावीर्याः प्रतस्थुरभितः खरम् ॥ ३३ ॥

महाकपालः स्थूलाक्षः प्रमाथी त्रिशिरास्तथा ।
चत्वार एते सेनाग्रे दूषणं पृष्ठतोऽन्वयुः ॥ ३४ ॥

सा भीमवेगा समराभिकामा
सुदारुणा राक्षसवीरसेना ।
तौ राजपुत्रौ सहसाऽभ्युपेता
माला ग्रहाणामिव चन्द्रसूर्यौ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे त्रयोविंशः सर्गः ॥

आदितः श्लोकाः 7494 आरण्यकाण्डे आदितः श्लोकाः 782

त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ।
राक्षसेनाभितप्ताया मैथिल्याश्च पदान्यथ ॥ ३७ ॥

स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ।
भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ॥ ३८ ॥

सम्भ्रान्तहृदयो रामः शशंस भ्रातरं प्रति ॥ ३९ ॥

पश्य लक्ष्मण वैदेह्याश्शीर्णाः कनकबिन्दवः ।
भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ४० ॥

तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४१ ॥

मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ।
भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति ॥४२॥

तस्या निमित्तं वैदेह्याद्वयोर्विवदमानयोः ।
बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४३ ॥

मुक्तामणिचितं चेदं तपनीयविभूषितम् ।
धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥ ४४ ॥

तरुणादित्यसङ्काशं वैडूर्यगुलिकाचितम् ।
विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् ॥ ४५ ॥

छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ।
भग्नदण्डमिदं कस्य भूमौ सौम्य निपातितम् ॥ ४६ ॥

काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ।
भीमरूपा महाकायाः कस्य वा निहता रणे ॥ ४७ ॥

दीप्तपावकसङ्काशो द्युतिमान् समरध्वजः ।
अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः ॥ ४८ ॥

रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ।
कस्येमेऽभिहता बाणाः प्रकीर्णा घोरकर्मणः ॥ ४९ ॥

शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ।
प्रतोदाभीषुहस्तो वै कस्यायं सारथिर्हतः ॥ ५० ॥

कस्येमौ पुरुषव्याघ्र शयाते निहतौ युधि ।
चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ ॥ ५१ ॥

पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ।
वैरं शतगुणं पश्य ममेदं जीवितान्तकम् ॥ ५२ ॥

सा घोरहृदयैः सौम्य राक्षसैः कामरूपिभिः ।
हृता मृता वा सीताऽपि भक्षिता वा तपस्विनी ॥ ५३ ॥

न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५४ ॥

भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण ।
के हि लोकेऽप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥ ५५ ॥

कर्तारमपि लोकानां शूरं करुणवेदिनम् ।
अज्ञानादवमन्येरन् सर्वभूतानि लक्ष्मण ॥ ५६ ॥

मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ।
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५७ ॥

मां प्राप्य हि गुणो दोषसंवृत्तः पश्य लक्ष्मण ।
अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५८ ॥

संहृत्यैव शशिज्योत्स्नां महान् सूर्य इवोदितः ।
संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशते ॥ ५९ ॥

नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥ ६० ॥

ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण ।
निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ६१ ॥

संनिरुद्धग्रहगणमावारितनिशाकरम् ।
विप्रनष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६२ ॥

विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ।
ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ॥
त्रैलोक्यं तु करिष्यामि संयुक्तं कालकर्मणा ॥ ६३ ॥

न तां कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ।
अस्मिन् मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् ॥ ६४ ॥

नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ।
मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् ॥ ६५ ॥

अर्दितं मम नाराचैर्ध्वस्तभ्रान्त मृगद्विजम्।
समाकुलममर्यादं जगत्पश्यार्य लक्ष्मण ॥ ६६ ॥

आकर्णपूर्णैरिषुभिर्जीवलोकं दुरावरैः।
करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ॥ ६७ ॥

मम रोषप्रयुक्तानां सायकानां बलं सुराः।
द्रक्ष्यन्त्यद्य विमुक्तानामतिदूरातिगामिनाम् ॥ ६८ ॥

नैव देवा न दैतेया न पिशाचा न राक्षसाः।
भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते ॥ ६९ ॥

देवदानवयक्षाणां लोका ये रक्षसामपि।
बहुधा न भविष्यन्ति बाणौघैश्शकलीकृताः ॥ ७० ॥

निर्मर्यादानिमान् लोकान् करिष्याम्यद्य सायकैः।
हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः ॥ ७१ ॥

तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम्।
नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ७२ ॥

इत्युक्त्वा रोषताम्राक्षो रामो निष्पीड्य कार्मुकम्।
शरमादाय संदीप्तं घोरमाशीविषोपमम् ॥ ७३ ॥

संदधे धनुषि श्रीमान् रामः परपुरञ्जयः।
युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ॥ ७४ ॥

यथा जरा यथा मृत्युर्यथा कालो यथा विधिः ।
नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ॥
तथाऽहं क्रोधसंयुक्तो न निवार्योऽस्मि सर्वथा ॥ ७५ ॥

पुरेव मे चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं
जगत् सशैलं परिवर्तयाम्यहम् ॥ ७४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे चतुःषष्टितमः सर्गः ॥

आदितः श्लोकाः 8892 आरण्यकाण्डे आदितः श्लोकाः 2180

## पञ्चषष्टितमः सर्गः

क्रोधोपसंहारप्रार्थनम् ॥

तप्यमानं तथा रामं सीताहरणकर्शितम् ।
लोकानामभवे युक्तं संवर्तकमिवानलम् ॥ १ ॥

वीक्षमाणं धनुस्सज्यं निश्वसन्तं मुहुर्मुहुः ।
हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा ॥ २ ॥

दग्धुकामं जगत्सर्वं युगान्ते तु यथा हरम् ॥ ३ ॥

अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः ।
अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ४ ॥

पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥ ५ ॥

चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ६ ॥

एकस्य नापराधेन लोकान् हन्तुं त्वमर्हसि ।
अन्यद्वदामि राजेन्द्र निदानं सर्वसम्पदाम् ॥ ७ ॥

धर्मे जयति नाधर्मः कदाचिदपि चोभयोः ।
सीता पतिव्रता लक्ष्मीर्न नाशं वै गमिष्यति ॥ ८ ॥

न तु जानामि कस्यायं भग्नस्सांग्रामिको रथः।
केन वा कस्य वा हेतोस्सायुधस्सपरिच्छदः ॥ ९ ॥

खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः।
देशो निर्वृत्तसङ्ग्रामस्सुघोरः पार्थिवात्मज ॥ १० ॥

एकस्य तु विमर्दोऽयं न द्वयोर्वदतां वर ।
न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ॥ ११ ॥

नैकस्य तु कृते लोकान् विनाशयितुमर्हसि ।
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥ १२ ॥

सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ।
को नु दारप्रणाशं ते साधु मन्येत राघव ॥ १३ ॥

सरितः सागराः शैला देवगन्धर्वदानवाः ।
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥ १४ ॥

येन राजन् हृता सीता तमन्वेषितुमर्हसि ।
मद्द्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः ॥ १५ ॥

समुद्रं च विचेष्यामः पर्वतांश्च वनानि च ।
गुहाश्च विविधा घोरा नदीः पद्मवनानि च ॥ १६ ॥

देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ।
यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् ॥ १७ ॥

न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ।
कोसलेन्द्र ततः पश्चात्प्राप्तकालं करिष्यसि ॥ १८ ॥

शिवेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततस्समुत्सादय हेमपुङ्खै-
र्महेन्द्रवज्रप्रतिमैः शरौघैः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे पञ्चषष्टितमः सर्गः ॥

आदितः श्लोकाः 8911 आरण्यकाण्डे आदितः श्लोकाः 2199

## षट्षष्टितमः सर्गः

### श्रीरामाश्वासनम् ॥

तं तथा शोकसन्तप्तं विलपन्तमनाथवत् ।
मोहेन महताऽऽविष्टं परिद्यूनमचेतनम् ॥ १ ॥

ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः ।
रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २ ॥

महता तपसा राम महता चापि कर्मणा ।
राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः ॥ ३ ॥

तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः ।
राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४ ॥

यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ।
प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५ ॥

दुःखितो हि भवांल्लोकांस्तेजसा यदि धक्ष्यते ।
आर्ताः प्रजा नरव्याघ्र क नुयास्यन्ति निर्वृतिम् ॥ ६ ॥

लोकस्वभाव एवैष ययातिर्नहुषात्मजः ।
गतश्शक्रेण सालोक्यमपतत्स तमः स्पृशन् ॥ ७ ॥

महर्षियो वसिष्ठस्तु यः पितुर्नः पुरोहितः ।
अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८ ॥

या चेयं जगतो माता देवी लोकनमस्कृता ।
अस्याश्च चलनं भूमेर्दृश्यते सत्यसंश्रय ॥ ९ ॥

यौ धर्मौ जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम् ।
आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ १० ॥

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ।
न दैवस्य प्रमुञ्चन्ति सर्वभूतादिदेहिनः ॥ ११ ॥

शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ ।
श्रूयेते नरशार्दूल न त्वं व्यथितुमर्हसि ॥ १२ ॥

नष्टायामपि वैदेह्यां हृतायामपि चानघ ।
शोचितुं नार्हसे वीर यथाऽन्यः प्राकृतस्तथा ॥ १३ ॥

त्वद्विधा न हि शोचन्ति सततं सत्यदर्शनाः ।
सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४ ॥

तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय ।
बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १५ ॥

अदृष्टगुणदोषाणामश्रुतानां तु कर्मणाम् ।
नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १६ ॥

त्वमेव हि पुरा राम मामेवं बहुशोऽन्वशाः ।
अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥ १७ ॥

बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया ।
शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १८ ॥

दिव्यं च मानुषं च त्वमात्मनश्च पराक्रमम् ।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९ ॥

किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ।
तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे षट्षष्टितमः सर्गः ॥

आदितः श्लोकाः 8931 आरण्यकाण्डे आदितः श्लोकाः 2219

## सप्तषष्टितमः सर्गः

### जटायुर्दर्शनम् ॥

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥ १ ॥

सन्निगृह्य महाबाहुः प्रवृद्धं कोपमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २ ॥

किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण ।
केनोपायेन पश्येयं सीतामिति विचिन्तय ॥ ३ ॥

तं तथा परितापार्तं लक्ष्मणो राममब्रवीत् ॥ ४ ॥

इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ।
राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् ॥ ५ ॥

सन्तीह गिरिदुर्गाणि निर्दराः कन्दराणि च ।
गुहाश्च विविधा घोरा नानामृगगणाकुलाः ॥ ६ ॥

आवासाः किन्नराणां च गन्धर्वभवनानि च ।
तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ॥ ७ ॥

त्वद्विधा बुद्धिसम्पन्ना महात्मानो नरर्षभ ।
आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥ ८ ॥

इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः ।
क्रुद्धो रामः शरं घोरं सन्धाय धनुषि क्षुरम् ॥ ९ ॥

ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ।
ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ॥
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १० ॥

अनेन सीता वैदेही भक्षिता नात्र संशयः ।
गृध्ररूपमिदं व्यक्तं रक्षो भ्रमति कानने ॥ ११ ॥

भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ।
एनं वधिष्ये दीप्तास्यैर्घोरैर्बाणैरजिह्मगैः ॥ १२ ॥

इत्युक्त्वाऽभ्यपतद्गृध्रं सन्धाय धनुषि क्षुरम् ।
क्रुद्धो रामस्समुद्रान्तां चालयन्निव मेदिनीम् ॥ १३ ॥

तं दीनो दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ॥ १४ ॥

यामोषधिमिवायुष्मन्नन्वेषसि महावने ।
सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५ ॥

त्वया विरहिता देवी लक्ष्मणेन च राघव ।
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६ ॥

सीतामभ्यवपन्नोऽहं रावणश्च रणे मया ।
विध्वंसितरथच्छत्रः पातितो धरणीतले ॥ १७ ॥

एतदस्य धनुर्भग्नमेतदस्य शरावरम् ।
अयं तु सारथिस्तस्य मत्पक्षनिहतो युधि ॥
अयमस्य रणे राम भग्नः सांग्रामिको रथः ॥ १८ ॥

परिश्रान्तस्य मे पक्षौ छित्वा खड्गेन रावणः ।
सीतामादाय वैदेहीमुत्पपात विहायसम् ॥ १९ ॥

रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि ॥ २० ॥

रामस्तस्य तु विज्ञाय बाष्पपूर्णमुखस्तदा ।
द्विगुणीकृततापार्तः सीतासक्तां प्रियां कथाम् ॥ २१ ॥

गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ।
निपपातावशो भूमौ रुरोद सहलक्ष्मणः ॥ २२ ॥

एकमेकायने दुर्गे निःश्वसन्तं मुहुर्मुहुः ।
समीक्ष्य दुःखितो रामः सौमित्रिमिदमब्रवीत् ॥ २३ ॥

राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥ २४ ॥

संपूर्णमपि चेदद्य प्रतरेयं महोदधिम् ।
सोऽपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः ॥ २५ ॥

नास्त्यभाग्यतरो लोके मत्तोऽस्मिन्सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २६ ॥

अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ।
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २७ ॥

इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः ।
जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥ २८ ॥

निकृत्तपक्षं रुधिरावसिक्तं
तं गृध्रराजं परिरभ्य रामः ।
क्व मैथिली प्राणसमा गतेति
विमुच्य बाष्पं निपपात भूमौ ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे सप्तषष्टितमः सर्गः ॥

आदितः श्लोकाः 8960 आरण्यकाण्डे आदितः श्लोकाः 2248

## अष्टषष्टितमः सर्गः

### जटायुस्संस्कारः

रामः संप्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् ।
सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १ ॥

ममायं नूनमर्थेषु यतमानो विहङ्गमः ।
राक्षसेन हतः संख्ये प्राणांस्त्यजति दुस्त्यजान् ॥ २ ॥

अयमस्य शरीरेऽस्मिन्प्राणो लक्ष्मण विद्यते ।
तथा हि स्वरहीनोऽयं विक्लवः समुदीक्षते ॥ ३ ॥

जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४ ॥

किं निमित्तोऽहरत्सीतां रावणस्तस्य किं मया ।
अपराधं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५ ॥

कथं तच्चन्द्रसङ्काशं मुखमासीन्मनोहरम् ।
सीतया कानि चोक्तानि तस्मिन्काले द्विजोत्तम ॥ ६ ॥

कथं वीर्यः कथंरूपः किं कर्मा स च राक्षसः ।
क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥ ७ ॥

तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ।
वाचाऽतिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८ ॥

हृता सा राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९ ॥

परिश्रान्तस्य मे तात पक्षौ छित्वा स राक्षसः।
सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १० ॥

उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव।
सर्वक्लेशविमुक्तं मां बाहुभ्यां संपरिष्वज ॥ ११ ॥

पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ १२ ॥

येन याति मुहूर्तेन सीतामादाय रावणः।
विप्रनष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १३ ॥

विन्दो नाम मुहूर्तोसौ स च काकुत्स्थ नाबुधत्।
त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः।
झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ॥ १४ ॥

न च त्वया व्यथा कार्या जनकस्य सुतां प्रति।
वैदेह्यां रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ॥ १५ ॥

असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः।
आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ॥ १६ ॥

पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च।
इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ॥ १७ ॥

ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः।
त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ॥ १८ ॥

स निक्षिप्य शिरो भूमौ प्रसार्या चरणौ तथा ।
विक्षिप्य च शरीरं स्वं पपात धरणीतले ॥ १९ ॥

तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ।
रामस्सुबहुभिर्दुःखैर्दीनस्सौमित्रिमब्रवीत् ॥ २० ॥

बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ।
अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ॥ २१ ॥

अनेकवार्षिको यस्तु चिरकालसमुत्थितः ।
सोऽयमद्य हतश्शेते कालो हि दुरतिक्रमः ॥ २२ ॥

पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे ।
सीतामभ्यवपन्नो वै रावणेन बलीयसा ॥ २३ ॥

गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ।
मम हेतोरयं प्राणान् मुमोच पतगेश्वरः ॥ २४ ॥

सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ।
शूराश्शरण्यास्सौमित्रे तिर्यग्योनिगतेष्वपि ॥ २५ ॥

सीताहरणजं दुःखं न मे सौम्य तथागतम् ।
यथा विनाशो गृध्रस्य मत्कृते च परन्तप ॥ २६ ॥

राजा दशरथः श्रीमान् यथा मम महायशाः ।
पूजनीयश्च मान्यश्च तथाऽयं पतगेश्वरः ॥ २७ ॥

सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् ।
गृध्रराजं हि धक्ष्यामि मत्कृते निधनं गतम् ॥ २८ ॥

नाथं पतगलोकस्य चितामारोपयाम्यहम् ।
इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ॥ २९ ॥

गोदावर्यास्तटे शुभ्रे चितां कुरु महाभुज ।
एवमुक्त्वा तु सौमित्रिं समालक्ष्य जटायुषम् ॥ ३० ॥

समुद्धृत्य गतिः श्रीमान् गोदावर्यास्तटं प्रति ।
ततो गत्वा तु तत्तीरे शुभ्रे कुशसमन्विते ॥ ३१ ॥

अवतीर्याथ निक्षिप्य मथित्वाग्निं महायशाः ।
लक्ष्मणेनाहृतैः काष्ठैश्चितां कृत्वा महाभुजः ॥ ३२ ॥

या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥ ३३ ॥

मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।
गृध्रराज महासत्व संस्कृतश्च मया व्रज ॥ ३४ ॥

एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ।
ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ॥ ३५ ॥

रामोऽथ सहसौमित्रिर्वनं गत्वा स वीर्यवान् ।
स्थूलान् हत्वा महारोहीननु तस्तार तं द्विजम् ॥ ३६ ॥

रोहिमांसानि चोत्कृत्य पेशीकृत्वा महायशाः ।
शकुनीनां ददौ रामो रम्ये हरितशाद्वले ॥ ३७ ॥

यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ।
तत्स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह ॥ ३८ ॥

गोदावरीमयातां तौ नदीं नरवरात्मजौ ॥ ३९ ॥

शास्त्रदृष्टेन विधिना जले तत्र च राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ४० ॥

स गृध्रराजः कृतवान्यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनश्शुभाम् ॥ ४१ ॥

कृतोदकौ तावपि पक्षिसत्तमे
स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो
वनं सुरेन्द्राविव विष्णुवासवौ ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे अष्टषष्टितमः सर्गः ॥

आदितः श्लोकाः 9002 आरण्यकाण्डे आदितः श्लोकाः 2290

## एकोनसप्ततितमः सर्गः

### अयोमुखीकबन्धयोर्दर्शनम् ॥

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ ।
अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥ १ ॥

तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिजग्मतुः ॥ २ ॥

गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३ ॥

व्यतिक्रम्य तु वेगेन व्यालसिंहनिषेवितम् ।
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४ ॥

ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५ ॥

नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ।
नानापक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतम् ॥ ६ ॥

दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७ ॥

ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ।
क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८ ॥

दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ।
नानासत्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९ ॥

ददृशाते तु तौ तत्र दरीं दशरथात्मजौ ।
पातालसमगंभीरां तमसा नित्यसंवृताम् ॥ १० ॥

आसाद्य तौ नरव्याघ्रौ दर्यास्तस्याविदूरतः ।
ददृशाते महारूपां राक्षसीं विकृतेक्षणाम् ॥ ११ ॥

भयदामल्पसत्वानां बीभत्सां रौद्रदर्शनाम् ।
लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२ ॥

भक्षयन्तीं मृगान्भीमान्विकटां मुक्तमूर्धजाम् ।
प्रैक्षेतां तौ तदा तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥

सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः ।
एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४ ॥

उवाच चैनं वचनं सौमित्रिमुपगुह्य सा ॥ १५ ॥

अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ।
नाथ पर्वतकूटेषु नदीनां पुलिनेषु च ।
आयुश्शेषमिमं वीर त्वं मया सह रंस्यसे ॥ १६ ॥

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः ।
कर्णनासौ स्तनौ चास्या विचकर्तारिसूदनः ॥ १७ ॥

कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८ ॥

तस्यां गतायां गहनं व्रजन्तौ वनमोजसा।
आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९ ॥

लक्ष्मणस्तु महातेजाः सत्त्ववान् शीलवाञ्छुचिः।
अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २० ॥

स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१ ॥

तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम्।
ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ २२ ॥

एष वञ्जुलको नाम पक्षी परमदारुणः।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३ ॥

तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा।
संजज्ञे विपुलश्शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४ ॥

संवेष्टितमिवात्यर्थं गगनं मातरिश्वना।
वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ २५ ॥

तं शब्दं कांक्षमाणस्तु रामः कक्षे सहानुजः।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६ ॥

आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम्।
विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७ ॥

रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिस्वनम् ॥ २८ ॥

अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९ ॥

एकेनोरसि घोरेण नयनेनाशुदर्शिना ।
महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३० ॥

भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् ।
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥ ३१ ॥

कराभ्यां विविधान् गृह्य ऋक्षान्पक्षिगणान् मृगान् ।
आकर्षन्तं विकर्षन्तमनेकान् मृगयूथपान् ।
स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ॥ ३२ ॥

अथ तौ समभिक्रम्य क्रोशमात्रे ददर्शतुः ।
महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ।
कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ ३३ ॥

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन् बलात् ॥ ३४ ॥

खड्गिनौ दृढधन्वानौ तिग्मतेजोवपुर्धरौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३५ ॥

तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे ।
बाल्यादनाश्रयत्वाच्च लक्ष्मणस्त्वभिविव्यथे ॥ ३६ ॥

उवाच च विषण्णस्सन्राघवं राघवानुजः ॥ ३७ ॥

पश्य मां वीर विवशं राक्षसस्य वशं गतम् ।
मयैकेन विनिर्युक्तः परिमुञ्चस्व राघव ॥ ३८ ॥

मां हि भूतबलिं दत्वा पलायस्व यथासुखम् ॥ ३९ ॥

अधिगन्तासि वैदेहीमचिरेणेति मे मतिः ॥ ४० ॥

प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ।
तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा ॥ ४१ ॥

लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ।
मा स्म त्रासं कृथा वीर न हि त्वादृग्विषीदति ॥ ४२ ॥

एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ।
पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः ॥ ४३ ॥

कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ।
घोरं देशमिमं प्राप्तौ मम भक्षावुपस्थितौ ॥ ४४ ॥

वदतं कार्यमिह वां किमर्थं चागतौ युवाम् ।
इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ॥ ४५ ॥

सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ।
ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं पुनः ॥ ४३ ॥

तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ ४७ ॥

कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ।
व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ॥ ४८ ॥

कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ।
त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ॥ ४९ ॥

नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ।
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५० ॥

इति ब्रुवाणो दृढसत्यविक्रमो
महायशा दाशरथिः प्रतापवान् ।
अवेक्ष्य सौमित्रिमुदारविक्रमः
स्थिरां तदा स्वां मतिमात्मनाऽकरोत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे एकोनसप्ततितमः सर्गः ॥

आदितः श्लोकाः **9053** आरण्यकाण्डे आदितः श्लोकाः **2341**

## सप्ततितमः सर्गः

### कबन्धहस्तच्छेदनम् ॥

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥

तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥ २ ॥

तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्तिं समापन्नो विक्रमे कृतनिश्चयः ॥ ३ ॥

त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः ॥ ४ ॥

तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ५ ॥

भीषणोऽयं महाकायो राक्षसो भुजविक्रमः ।
लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ६ ॥

निश्चेष्टानां वधो राजन् कुत्सितो जगतीपते ।
क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ७ ॥

एतत्संजल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ।
विदार्यास्यं तदा रौद्रस्तौ भक्षयितुमारभत् ॥ ८ ॥

ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशयोः ॥ ९ ॥

दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः ।
चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ १० ॥

स पपात महाबाहुश्छिन्नबाहुर्महास्वनः ।
खं च गां च दिशश्चैव नादयञ्जलदो यथा ॥ ११ ॥

स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ।
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ १२ ॥

इति तस्य ब्रुवाणस्य लक्ष्मणश्शुभलक्षणः ।
शशंस तस्य काकुत्स्थं कबन्धस्य महाबलः ॥ १३ ॥

अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः ।
अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १४ ॥

मात्रा प्रतिहृते राज्ये रामः प्रव्राजितो वनम् ।
मया सह चरत्येष भार्यया च महद्वनम् ॥ १५ ॥

अस्य देवप्रभावस्य वसतो विजने वने ।
राक्षसापहृता भार्या यामिच्छन्ताविहागतौ ॥ १६ ॥

त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे ॥ १७ ॥

एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः ।
उवाच परमप्रीतस्तदिन्द्रवचनं स्मरन् ॥ १८ ॥

स्वागतं वां नरव्याघ्रौ
दिष्ट्या पश्यामि चाप्यहम् ।
दिष्ट्या चेमौ निकृत्तौ मे
युवाभ्यां बाहुबन्धनौ ॥ १९ ॥

विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा ।
तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे सप्ततितमः सर्गः ॥

आदितः श्लोकाः **9073** आरण्यकाण्डे आदितः श्लोकाः **2361**

## एकसप्ततितमः सर्गः

कबन्धेन स्ववृत्तान्तकथनम् ॥

पुरा राम महाबाहो महाबलपराक्रम ।
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् । ॥ १ ॥

यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः ॥ २ ॥

सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ।
ऋषीन्वनगतान्राम त्रासयामि ततस्ततः ॥ ३ ॥

ततः स्थूलशिरा नाम महर्षिः कोपितो मया ।
संचिन्वन् विविधं वन्यं रूपेणानेन धर्षितः ॥ ४ ॥

तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ।
एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ॥ ५ ॥

स मया याचितः क्रुद्धश्शापस्यान्तो भवेदिति ।
अभिशापकृतस्येति तेनेदं भाषितं वचः ॥ ६ ॥

यदा छित्त्वा भुजौ रामस्त्वां दहेद्विजने वने ।
तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ॥ ७ ॥

श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण ।
इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ॥ ८ ॥

अहं हि तपसोग्रेण पितामहमतोषयम् ।
दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् ॥ ९ ॥

दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ।
इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ॥ १० ॥

तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ।
सक्थिनी चैव मूर्धा च शरीरे संप्रवेशितम् ॥ ११ ॥

स मया याच्यमानः सन्नानयद्यमसादनम् ।
पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ॥ १२ ॥

अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ।
वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ॥ १३ ॥

एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ ।
प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ॥ १४ ॥

सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् ।
सिंहद्विपमृगव्याघ्रान् भक्षयामि समन्ततः ॥ १५ ॥

स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ।
छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ॥ १६ ॥

अनेन वपुषा राम वनेऽस्मिन् राजसत्तम ।
यद्यत् पश्यामि सर्वस्य ग्रहणं साधु रोचये ॥ १७ ॥

अवश्यं ग्रहणं रामो मन्येऽहं समुपैष्यति ।
इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ॥ १८ ॥

स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ।
शक्यो हन्तुं यथा तत्वमेवमुक्तं महर्षिणा ॥ १९ ॥

अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ।
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ २० ॥

एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ।
इदं जगाद वचनं लक्ष्मणस्योपश्रृण्वतः ॥ २१ ॥

रावणेन हृता सीता मम भार्या यशस्विनी ।
निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ॥ २२ ॥

नाममात्रं तु जानामि न रूपं तस्य रक्षसः ।
निवासं वा प्रभावं वा वयं तस्य न विद्महे ॥ २३ ॥

शोकार्तानामनाथानामेवं विपरिधावताम् ।
कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् ॥ २४ ॥

काष्ठान्यानीय शुष्काणि काले भग्नानि कुञ्जरैः ।
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ॥ २५ ॥

स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ।
कुरु कल्याणमत्यर्थं यदि जानासि तत्वतः ॥ २६ ॥

एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ।
प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ॥ २७ ॥

दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ।
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ॥२८॥

अदग्धस्य हि विज्ञातुं शक्तिरस्ति न मे प्रभो ।
राक्षसं तं महावीर्यं सीता येन हृता तव ॥ २९ ॥

विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ।
स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ॥ ३० ॥

किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ।
तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ॥ ३१ ॥

दग्धस्त्वयाऽहमवटे न्यायेन रघुनन्दन ।
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥ ३२ ॥

तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ।
कल्पयिष्यति ते प्रीतस्साहाय्यं लघुविक्रमः ॥ ३३ ॥

न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव ।
सर्वान् परिसृतो लोकान् पुरा वै कारणान्तरे ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे एकसप्ततितमः सर्गः ॥

आदितः श्लोकाः **9107** आरण्यकाण्डे आदितः श्लोकाः **2395**

## द्विसप्ततितमः सर्गः

सीताप्राप्त्युपायकथनम् ॥

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ।
कृतवन्तौ च महतीं चितां गिरिगुहोपमाम् ॥ १ ॥

ततः कबन्धमारोप्य चितां ज्वलिततेजसौ ।
बाहू च सुमहाबाहू योजनायतविस्तृतौ ॥ २ ॥

लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिस्समन्ततः ।
चितामादीपयामास सा प्रजज्वाल सर्वतः ॥ ३ ॥

तां प्रेक्ष्य सर्वतो दीप्तां चितां दृढधनुर्धरः ।
विस्मयान इदं वाक्यं राघवं लक्ष्मणोऽब्रवीत् ॥ ४ ॥

दग्धो जटायुः पूर्वं तु सीतामन्वेषता त्वया ।
अयं द्वितीयो निर्दग्धस्तृतीयं किं नु वक्ष्यसि ॥ ५ ॥

महाभ्रशिखरप्रख्यं कबन्धमनलो महान् ।
अन्तरिक्षं महोल्काभिराव्रणोत्स सहस्रशः ॥ ६ ॥

तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ७ ॥

स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः ।
अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ॥ ८ ॥

ततश्चिताया वेगेन भास्वरो विमलाम्बरः ।
उत्पपाताशु संहृष्टस्सर्वप्रत्यङ्गभूषणः ॥ ९ ॥

विमाने भास्वरे तिष्ठन् हंसयुक्ते यशस्करे ।
प्रभया च महातेजा दिशो दश विराजयन् ॥१०॥

सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् ।
शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥११॥

राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते ॥१२॥

परिमृष्टो दशान्तेन दशाभागेन सेव्यते ।
दशाभागगतो हीनस्त्वं हि रामस्सलक्ष्मणः ॥
यत्कृते व्यसन प्राप्तं त्वया दारप्रधर्षणम् ॥१३॥

तदवश्यं त्वया कार्यस्स सुहृत्सुहृदां वर ।
अकृत्वा हि न ते सिद्धिमहं पश्यामि चिन्तयन्॥ १४ ॥

श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ १५ ॥

ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
निवसत्यात्मवान् वीरश्चतुर्भिः सह वानरैः ॥ १६ ॥

वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः ।
सत्यसन्धो विनीतश्च धृतिमान् मतिमान् महान् ॥ १७ ॥

दक्षः प्रगल्भो द्युतिमान् महाबलपराक्रमः ।
भ्रात्रा विवासितो राम राज्यहेतोर्महाबलः ॥ १८ ॥

स ते सहायो मित्रं च सीतायाः परिमार्गणे ।
भविष्यति हि ते राम मा च शोके मनः कृथाः ॥ १९ ॥

भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा ।
कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥ २० ॥

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव
अद्रोहाय समागम्य दीप्यमाने विभावसौ ॥ २१ ॥

न च ते सोऽवमन्तव्यः सुग्रीवो वानराधिपः ।
कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ॥ २२ ॥

शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् ।
कृतार्थो वाऽकृतार्थो वा कृत्यं तव करिष्यति ॥ २३ ॥

स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ।
भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ॥ २४ ॥

सन्निधायायुधं क्षिप्रमृश्यमूकालयं कपिम् ।
कुरु राघव सत्येन वयस्यं वनचारिणम् ॥ २५ ॥

स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिपुङ्गवः ।
नरमांसाशिनां लोके नैपुण्यादधिगच्छति ॥ २६ ॥

न तस्याविदितं लोके किंचिदस्ति हि राघव ।
यावत्सूर्यः प्रतपति सहस्रांशुररिन्दम ॥ २७ ॥

स नदीर्विपुलाञ्छैलान् गिरिदुर्गाणि कन्दरान् ।
अन्विष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ॥ २८ ॥

वानरांश्च महाभागान् प्रेषयिष्यति राघव ।
दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ॥ २९ ॥

स यास्यति वरारोहां निर्मलां रावणालये ॥ ३० ॥

स मेरुशृङ्गाग्रगतामनिन्दितां
प्रविश्य पातालतलेऽपि वाऽऽश्रिताम् ।
प्लवङ्गमानां प्रवरस्तव प्रियां
निहत्य रक्षांसि पुनः प्रदास्यति ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे द्विसप्ततितमः सर्गः ॥

आदितः श्लोकाः 9138 आरण्यकाण्डे आदितः श्लोकाः 2426

## त्रिसप्ततितमः सर्गः

### ऋश्यमूकाचलमार्गप्रदर्शनम् ॥

निदर्शयित्वा रामाय सीतायाः प्रतिपादने ।
वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १ ॥

एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः ।
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २ ॥

जम्बुप्रियालपनसप्लक्षन्यग्रोधतिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३ ॥

धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ।
नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः
अशोकास्त्वतिमुक्ताश्च सुभद्राः पारिभद्रकाः ॥ ४ ॥

तानारुह्याथवा भूमौ पातयित्वा च तान् बलात् ।
फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ॥ ५ ॥

तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् ।
नन्दनप्रतिमं चान्यत् कुरवो ह्युत्तरा इव ॥ ६ ॥

सर्वकामफला वृक्षाः पादपास्तु मधुस्रवाः ।
सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा ॥ ७ ॥

फलभारानताश्चैव महाविटपधारिणः ।
शोभन्ते सर्वतस्तत्र मेघपर्वतसन्निभाः ॥ ८ ॥

तानारुह्याथवा भूमौ पातयित्वा यथासुखम् ।
फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ॥ ९ ॥

चङ्क्रमन्तौ वरान् देशान् शैलाच्छैलं वनाद्वनम् ।
ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ॥ १० ॥

अशर्करामविभ्रंशां समतीर्थामशैवलाम् ।
राम सञ्जातवालूकां कमलोत्पलशोभिताम् ॥ ११ ॥

तत्र हंसाः प्लवाः क्रौञ्चाः कुरराश्चैव राघव ।
वल्गुस्वना निकूजन्ति पम्पासलिलगोचराः ॥ १२ ॥

नोद्विजन्ते नरान् दृष्ट्वा वधस्याकोविदाः पुरा ।
घृतपिण्डोपमान् स्थूलांस्तान् द्विजान् भक्षयिष्यथः ॥

रोहितान् वक्रतुण्डांश्च नलमीनांश्च राघव ।
पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान् हतान् ॥ १४ ॥

निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान् ।
तव भक्त्या समायुक्तो लक्ष्मणस्सम्प्रदास्यति ॥ १५ ॥

भृशं ते खादतो मत्स्यान् पम्पायाः पुष्पसञ्चये ।
पद्मगन्धि शिवं वारि स्वादु शीतमनामयम् ॥ १६ ॥

उद्धृत्य सितमक्लिष्टं रूप्यस्फटिकसन्निभम् ।
अथ पुष्करपत्रेण लक्ष्मणः पाययिष्यति ॥ १७ ॥

स्थूलान् गिरिगुहाशय्यान् वराहान् वनचारिणः ।
अपां लोभादुपावृत्तान् वृषभानिव नर्दतः ।
रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम ॥ १८ ॥

सायाह्ने विचरन् राम दर्शयिष्यति लक्ष्मणः ।
पद्मषण्डयुतं स्वादु कूजत्पक्षिगणैर्युतम् ॥ १९ ॥

शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि ॥ २० ॥

सुमनोभिश्चितांस्तत्र तिलकान्नक्तमालकान् ।
उत्पलानि च फुल्लानि पङ्कजानि च राघव ॥ २१ ॥

न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः ।
न च वै म्लानतां यान्ति न च शीर्यन्ति राघव ॥

मतङ्गशिष्यास्तत्रासन्नृषयस्सुसमाहिताः ।
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २३ ॥

ये प्रपेतुर्महिं तूर्णं शरीरात्स्वेदबिन्दवः ।
तानि माल्यानि जातानि मुनीनां तपसा तदा ।
स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ॥ २४ ॥

तेषामद्यापि तत्रैव दृश्यते परिचारिणी ।
श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ॥ २५ ॥

त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् ।
दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ॥ २६ ॥

ततस्तद्राम पम्पायास्तीरमासाद्य पश्चिमम् ।
आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ॥ २७ ॥

न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम् ।
विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ॥ २८ ॥

ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम् ।
मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २९ ॥

तस्मिन्नन्दनसंकाशे देवारण्योपमे वने ।
नानाविहगसंकीर्णे रंस्यसे राम निर्वृतः ॥ ३० ॥

ऋश्यमूकस्तु पम्पायाः पुरस्तात् पुष्पितद्रुमः ।
सुदुःखारोहणो नाम शिशुनागाभिरक्षितः । ॥ ३१ ॥

उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः ॥ ३२ ॥

शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ।
यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ ३३ ॥

न त्वेनं विषमाचारः पापकर्माऽधिरोहति ॥ ३४ ॥

यस्तु तं विषमाचारः पापकर्माऽधिरोहति ।
तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ॥ ३५ ॥

तत्रापि शिशुनागानामाक्रन्दः श्रूयते महान् ।
क्रीडतां राम पम्पायां मतङ्गाश्रमवासिनाम् ॥ ३६ ॥

सिक्ता रुधिरधाराभिः संहृत्य परमद्विपाः ।
प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ॥ ३७ ॥

ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् ।
निर्वृताः संविगाहन्ते वनानि वनगोचराः ॥ ३८ ॥

ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ।
रुरूनपेतापजयान्दृष्ट्वा शोकं जयिष्यसि ॥ ३९ ॥
राम तस्य तु शैलस्य महती शोभते गुहा ।
शिलापिधाना काकुत्स्थ दुःखं चास्याःप्रवेशनम् ॥ ४० ॥
तस्यां गुहायां प्राग्द्वारे महान् शीतोदको हृदः ।
बहुमूलफलो रम्यो नानामृगगणायुतः ॥ ४१ ॥
तस्यां वसति सुग्रीवश्चतुर्भिस्सह वानरैः ।
कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ॥ ४२ ॥
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ ।
स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ॥ ४३ ॥
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ ।
प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके ॥ ४४ ॥
गम्यतां कार्यसिद्ध्यर्थमिति तावब्रवीत्स च ।
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४५ ॥

स तत् कबन्धः प्रतिपद्य रूपं
वृतः श्रिया भास्करतुल्यदेहः ।
निदर्शयन् राममवेक्ष्य खस्थः
सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे त्रिसप्ततितमः सर्गः ॥

आदितः श्लोकाः 9184 आरण्यकाण्डे आदितः श्लोकाः 2472

## चतुःसप्ततितमः सर्गः

### शबरीस्वर्गगति ॥

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ।
आतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १ ॥

तौ शैलेष्वाचितान् वृक्षान् क्षौद्रकल्पफलान् द्रुमान् ।
वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २ ॥

कृत्वा च शैलपृष्ठे तु तौ वासं रघुनन्दनौ ।
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३ ॥

तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम् ।
अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥ ४ ॥

तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् ।
सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥ ५ ॥

तौ तु दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः ।
रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥ ६ ॥

पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि ॥ ७ ॥

तामुवाच ततो रामः श्रमणीं शंसितव्रताम् ॥ ८ ॥

कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्द्धते तपः ।
कच्चित्ते नियतः क्रोध आहारश्च तपोधने ॥ ९ ॥

कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् ।
कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणि ॥१०॥

रामेण तापसी पृष्टा सा सिद्धा सिद्धसम्मता ।
शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ॥ ११ ॥

अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया ।
अद्य मे सफलं तप्तं गुरवश्च सुपूजिताः ॥ १२ ॥

अद्य मे सफलं जन्म स्वर्गश्चैव भविष्यति ।
त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १३ ॥

चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन ।
गमिष्याम्यक्षयान् लोकान् त्वत्प्रसादादरिन्दम ॥ १४ ॥

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १५ ॥

तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः ।
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १६ ॥

स ते प्रतिगृहीतव्यः सौमित्रीसहितोऽतिथिः ।
तं च दृष्ट्वा वरान् लोकानक्षयांस्त्वं गमिष्यसि ॥ १७ ॥

मया तु विविधं वन्यं संचितं पुरुषर्षभ ।
तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् ॥ १८ ॥

एवमुक्तस्तु धर्मात्मा शबर्या शबरीमिदम् ।
राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥ १९ ॥

दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः ।
श्रुतं प्रत्यक्षमिच्छामि संद्रष्टुं यदि मन्यसे ॥ २० ॥

एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् ।
शबरी दर्शयामास तावुभौ तद्वनं महत् ॥ २१ ॥

पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् ।
मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २२ ॥

इह ते भावितात्मानो गुरवो मे महामते ।
जुहवांचक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् ॥ २३ ॥

इयं प्रत्यक्स्थली वेदिर्यत्र ते पुरुषर्षभाः ।
पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २४ ॥

तेषां तपःप्रभावेन पश्याद्यापि रघूत्तम ।
द्योतयन्ति दिशः सर्वाः श्रिया वेद्योऽतुलप्रभाः ॥ २५ ॥

अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ।
चिन्तितेऽभ्यागतान् पश्य सहितान् सप्त सागरान् ॥

कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह ।
अद्यापि नैव शुष्यन्ति प्रदेशे रघुनन्दन ॥ २७ ॥

देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै ।
पुष्पैः कुवलयैः सार्द्धं म्लानत्वं न तु यान्ति वै ॥ २८ ॥

कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ।
तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत् कलेबरम् ॥ २९ ॥

तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् ।
मुनीनामाश्रमो येषामहं च परिचारिणी ॥ ३० ॥

धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः ।
प्रहर्षमतुलं लेभे आश्चर्यमिति तत्त्वतः ॥ ३१ ॥

तामुवाच ततो रामः श्रमणीं संशितव्रताम् ।
अर्चितोऽहं त्वया भद्रे गच्छ कामं यथासुखम् ॥ ३२ ॥

इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनांबरा ।
तस्मिन् मुहूर्ते शबरी देहं जीर्णं जिहासती ॥ ३३ ॥

अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने ।
ज्वलत्पावकसंकाशा स्वर्गमेव जगाम सा ॥ ३४ ॥

दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ।
दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ॥ ३५ ॥

विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ।
प्रणम्य शिरसा रामं स्वर्गता सुप्रभानना ॥ ३६ ॥

यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत् पुण्यं शबरी स्थानं जगामात्मसमाधिना ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे चतुःसप्ततितमः सर्गः ॥

आदितः श्लोकाः 9221 आरण्यकाण्डे आदितः श्लोकाः 2509

## पञ्चसप्ततितमः सर्गः

### पम्पादर्शनम् ॥

दिवं तु तस्यां यातायां शबर्यां स्वेन तेजसा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥ १ ॥

स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥ २ ॥

दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यो महात्मनाम् ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥ ३ ॥

सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण ।
उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥ ४ ॥

प्रनष्टमशुभं यत्तत्कल्याणं समुपस्थितम् ।
तेन तत्त्वेन हृष्टं मे मनो लक्ष्मण संप्रति ॥ ५ ॥

हृदये हि नरव्याघ्र शुभमाविर्भविष्यति ॥ ६ ॥

तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ।
ऋश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ॥ ७ ॥

यस्मिन् वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः ।
नित्यं वालिभयात्त्रस्तश्चतुर्भिः सह वानरैः ॥ ८ ॥

अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ।
तदधीनं हि मे सौम्य सीतायाः परिमार्गणम् ॥ ९ ॥

इति ब्रुवाणं तं वीरं रामं सौमित्रिरब्रवीत् ।
गच्छावस्त्वरितं तत्र ममापि त्वरते मनः ॥ १० ॥

आश्रमात्तु ततस्तस्मान्निर्गत्य च विशांपतिः ।
आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः ॥ ११ ॥

समीक्षमाणः पुष्पाढ्यं सर्वतो विपुलद्रुमम् ।
कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च कीरकैः ॥ १२ ॥

एतैश्चान्यैश्च विविधैर्नादितं तद्वनं महत् ।
स रामो विविधान् वृक्षान् सरांसि विविधानि च ॥

पश्यन् कामाभिसन्तप्तो जगाम परमं ह्रदम् ।
स तामासाद्य वै रामो दूरादुदकवाहिनीम् ॥ १४ ॥

मतङ्गसरसं नाम ह्रदं समवगाहत ।
ततो जग्मतुरव्यग्रौ राघवौ हि समाहितौ ॥ १५ ॥

स तु शोकसमाविष्टो रामो दशरथात्मजः ।
विवेश नलिनीं पम्पां पङ्कजैश्च समावृताम् ॥ १६ ॥

तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ।
रम्योपवनसंबाधां पद्मसंपीडितोदकाम् ॥ १७ ॥

स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसंतताम् ।
मत्स्यकच्छपसंबाधां तीरस्थद्रुमशोभिताम् ॥ १८ ॥

सर्वाभिरिव युक्ताभिर्लताभिरनुवेष्टिताम् ।
किन्नरोरगगन्धर्वयक्षराक्षससेविताम् ॥ १९ ॥

नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम् ।
पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः ॥ २० ॥

नीलां कुवलयैर्जातैर्बहुवर्णां कुथामिव ।
अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् ॥ २१ ॥

पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ।
स तां दृष्ट्वा ततः पम्पां रामः सौमित्रिणा सह ॥ २२ ॥

विललाप स तेजस्वी कामाद्दशरथात्मजः ।
तिलकैर्बीजपूरैश्च वटैः शुक्लद्रुमैस्तथा ।
पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ २३ ॥

मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुलैस्तथा ।
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ॥ २४ ॥

अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ॥ २५ ॥

अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ।
ऋश्यमूक इति ख्यातश्चित्रपुष्पितकाननः ॥ २६ ॥

हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ।
अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ॥ २७ ॥

सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ ।
इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ॥ २८ ॥

राज्यभ्रष्टेन दीनेन तस्यामासक्तचेतसा ।
कथं मया विना शक्यं सीतां लक्ष्मण जीवितुम् ॥ २९ ॥

इत्येवमुक्त्वा मदनाभिपीडितः
स लक्ष्मणं वाक्यमनन्यचेतसम् ।
विवेश पम्पां नलिनीं मनोरमां
रघूत्तमः शोकविषादयन्त्रितः ॥ ३० ॥

ततो महद्वर्त्म सुदूरसंक्रमः
क्रमेण गत्वा प्रविलोकयन् वनम् ।
ददर्श पम्पां शुभदर्शकानना-
मनेकनानाविधपक्षिसङ्कुलाम् ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
आरण्यकाण्डे पञ्चसप्ततितमः सर्गः ॥

आदितः श्लोकाः 9252 आरण्यकाण्डे आदितः श्लोकाः 2540

॥ इत्यारण्यकाण्डं समाप्तम् ॥

अस्यानन्तरं किष्किन्धाकाण्डः भविष्यति ।
तस्यायामाद्यः श्लोकः
स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥

॥ शुभं भूयात् ॥

## ॥ शुद्धिपत्रम् ॥

| पृष्टम् | श्लोकम् | पादम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| 17 | 21 | 2 | महद्न्यैसु | महद्न्यैस्सु |
| ,, | 24 | 1 | सक्ष्मणः | लक्ष्मणः |
| 19 | 35 | 1 | गमिष्यति | गमिष्यसि |
| 29 | 14 | 1 | धनुष्पाणिश्चाला | धनुष्पाणिर्श्चाला |
| 49 | 37 | 2 | वज्र | वज्रं |
| 54 | 37 | 1 | सत्त्व | सत्त्वं |
| 84 | 5 | 2 | उत्तिष्टोत्तिष्ट | उत्तिष्ठोत्तिष्ठ |
| 85 | 12 | 1 | मालिनी | मालिनि |
| 91 | 14 | 1 | सल्लीन | संल्लीन |
| 96 | 23 | 1 | बविष्यति | भविष्यति |
| 102 | 40 | 1 | रुक्मपुङ्खा | रुक्मपुङ्खा |
| 110 | 1 | 2 | त्रासो | स्त्रासो |
| 112 | 23 | 2 | धरणिं | धरणीं |
| 123 | 9 | 2 | विस्रुब्धो | विस्रब्धो |
| 141 | 31 | 1 | माषः | माषाः |
| 167 | 14 | 1 | स्वरसम्पन्न | स्वरसम्पन्न |
| 234 | 3 | 2 | व्यधितं | व्यथितं |
| 282 | 10 | 1 | दक्षिणौ | दक्षिणे |